अखिलभारतीय—प्राच्यविद्यासम्मेलनम्

शतवर्षमहोत्सवग्रन्थमाला—४८

# ब्रह्मसूत्रभाष्यसमीक्षा

(चतुःसूत्र्यन्तभागस्य)

डॉ. शंतनुः अयाचितः

प्रधानसंपादकः

आचार्यः श्रीनिवासः वरखेडी

कुलगुरु

संपादकः

आचार्यः मधुसूदनः पेन्ना

संचालकः संशोधन—प्रकाशनविभागः



राष्ट्रहिताय संस्कृतम्

कविकुलगुरु—कालिदास—संस्कृत—विश्वविद्यालयः

रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)

तथा

न्यू भारतीय बुक कॉर्पोरेशन, नव देहली

2020

अखिलभारतीय–प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला – 48

# ब्रह्मसूत्रभाष्यसमीक्षा

## (चतुःसूत्र्यन्तभागस्य)

डॉ. शंतनुः अयाचितः

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः



कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)
एवं
न्यू भारतीय बुक कॉरपोरेशन, दिल्ली

| | | |
|---|---|---|
| शीर्षकम् | – | **ब्रह्मसूत्रभाष्यसमीक्षा** |
| लेखकः | – | डॉ. शंतनुः अयाचितः |
| प्रधानसंपादकः | – | आचार्यः श्रीनिवासः वरखेडी<br>कुलगुरु, क.का.सं.वि., रामटेकम् |
| संपादकः | – | आचार्यः मधुसूदनः पेन्ना<br>संचालकः संशोधन–प्रकाशनविभागः<br>क.का.सं.वि., रामटेकम् |
| संपादकमण्डलम् | – | डॉ. दिनकर मराठे, क.का.सं.वि., रामटेक<br>डॉ. वीना गाणु, नागपुर. |
| प्रकाशनवर्षम् | – | २०२० |
| आवृत्तिः | – | प्रथमा |
| मूल्यम् | – | 160.00 |
| आय.एस.बी.एन. | – | 9788183154260 |
| मुखपृष्ठम् | – | श्री. उमेश पाटील, क.का.सं.वि., रामटेकम् |
| प्रकाशकः | – | कुलसचिवः,<br>कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः,<br>प्रशासकीयभवनम्, मौदामार्गस्य, रामटेकम्. |

एवं

न्यू भारतीय बुक कॉरपोरेशन
२०८, द्वितीय तल, प्रकाशदीप बिल्डिंग,
४७३५/२२, अंसारी रोड, दरिया गंज,
नई दिल्ली – ११०००२
फोन नं. : २३२८०२१४, २३२८०२०९



एस. के. आफॉसेट, दिल्ली

## PREFACE

It is indeed a matter of great pleasure and pride for Kavikulaguru Kalidas Sanskrit University, Ramtek to have this rarest opportunity of hosting the 50th session of All India Oriental Conference at Nagpur. This AIOC-50th session at Nagpur will be forever remembered by all as the year 2019 also happens to be the year of Centenary Celebration of AIOC. The premier objective with which the great scholars of yester years had contemplated and established this national academic event called All India Oriental Conference has been achieved through these years with scores of young scholars contributing significantly to the treasure house of knowledge through their valuable research work.

The research of yore and of the present should be properly recorded so as to make it easily available to all lovers of knowledge and wisdom in the years to come. With this objective, we have contemplated to commemorate the 100th year of this grand event of 50th session of AIOC by way of publishing 100 monographs on different subjects in four languages viz., Sanskrit, Hindi, Marathi and English. It is no doubt a herculean task but still worth of it, for the reason that these 100 monographs will inspire many young scholars to take upon a fresh study and research of the oriental subjects with more vigour and zeal.

The AIOC Centenary Publication Series includes wide variety of subjects like Literature, Language, Veda, Indian Philosophy, Sanskrit Grammar, Law, Children Literature, Yoga, Astronomy and Astrology, Ayurveda, Pali, Prakrit, Jain, Buddhism, Education, Library Science, Poetics, Aesthetics, and Indology. It also includes reprint of some rare texts of academic importance which have gone out of print are not easily available. We wish to mark this centenary celebrations with this series that connects the glory of the past and aspirations of future. I place on record my sincere gratitude to all the authors of these monographs who have kindly contributed to the richness of this

series.

I am confident that the books published in these series will definitely inspire the lovers of Oriental Learning in general and of Sanskrit Language and Literature in particular.

On this occasion, we have published a memorable book of all the speeches of Section-Presidents of all previous sessions of AIOC. It is indeed a very capacious addition to any collection. I with all respect thank two eminent scholars of our times - Prof. Gautam Patel, President and Prof. Saroja Bhate, General Secretary, the torch bearers of AIOC who have not only encouraged us in this venture but also made all efforts to provide these valuable historical speeches for us. I thank all executive members of AIOC and my colleagues of the varsity for making this event a grand success.

My words fall short in describing the painstaking efforts and scholarly commitment of my esteemed colleague Prof. Madhusudan Penna, local secretary of this session in bringing out this series.

I also take this opportunity to profusely thank Shri. Subhash Jain and Shri Dipak Jain, the proprietors of New Bharatiya Book Corporation, New Delhi for their enthusiastic approach and timely work with all precision and grace.

Let us all sanctify ourselves in the eternal flow of wisdom by reading these books and recommending these to others also!

सरस्वती श्रुतिमहती महीयताम्

Ramtek<br>10th January 2020

Prof. Srinivasa Varakhedi<br>Vice Chancellor, KKSU

**Kavikulaguru Kalidas Sanskrit University**
**All India Oriental Conference**

**100th Year 50th Session**
**10th-12th January, 2020**

**Chief Patron**
Hon'ble Nitin Gadkari
Minister of Road, Transport & Highways of India

**Patron**
Prof. Srinivasa Varakhedi
Vice Chancellor, KKSU, Ramtek

**AIOC President**
Prof. Gautam Patel
Chairman, Sanskrit Seva Samiti, Ahmedabad.

**AIOC General Secretary**
Prof. Saroja Bhate
Professor of Sanskrit (Retd.), Pune University, Pune

**AIOC Local Secretary**
Prof. Penna Madhusudan
Dean, KKSU, Ramtek

**Additional Local Secretary**
Dr. Harekrishna Agasti
Dr. Dinakar Marathe
Dr. Kalapini Agasti
Dr. Parag Joshi

**Organising Committee**
Prof. C.G. Vijayakumar, Registrar (I/c) & Dean, KKSU, Ramtek
Prof. Nanda Puri, Dean, KKSU, Ramtek
Prof. Krishnakumar Pandey, Dean, KKSU, Ramtek
Prof. Laita Chandratre, Dean, KKSU, Ramtek
Dr. Ramachandra Joshi, Finance Officer, KKSU, Ramtek
Dr. Umesh Shivahare, Controller of Examination, KKSU, Ramtek
Dr. Dipak Kapade, Librarian, KKSU, Ramtek
Dr. Renuka Bokare, PRO, KKSU, Ramtek
Shri. Rajivranjan Mishra, Technical Head, KKSU, Ramtek
Shri. Pravin Kalambe, Security Officer, KKSU, Ramtek

## Reception Committee

Prof. Srinivasa Varakhedi, Chairperson Reception Committee & VC, KKSU
Parampujya Govindagiri Swamiji, Rishikesh
Prof. P.T. Chande, Former VC, KKSU
Prof. Uma Vaidya, Former VC, KKSU
Prof. Vijendra Kumar, VC, National Law University, Nagpur
Prof. Rajnish Shukla, VC, National Hindi University, Wardha
Prof. Vinayak Kane, VC, RTM Nagpur University, Nagpur
Shri. Krupal Tumane, Member of Parliament
Shri. Girishji Vyas, Member of Legislative Council
Shri. Chandrashekhar Bawankule, Guardian Minister, Nagpur
Prof. Vishram Jamdar, Director, VNIT, Nagpur
Dr. Bhushankumar Upadhyay, Commissioner of Police, Nagpur
Shri. Vijay Phanshikar, Editor, The Hitavada, Nagpur
Shri. Rajkumar Tirpude, Tirpude Group of Insitutions, Nagpur
Shri. Mohabbat Singh, Tuli International, Nagpur.
Shri. Chandragupta Varnekar, Principal Retd., Nagpur
Shri. Suresh Sharma, Baidyanath, Nagpur
Shri. Prabhakar Rao Mundle, Dharampeth Educational Institutions, Nagpur

## Executive Committee

Prof. G. U. Thite,
Vice President

Dr. Brijeshkumar Shukla,
Treasurer

## Members

Dr. Rajni Satish Chandra Jha
Prof. Shukla Ramakant
Dr. Behera Ranjit
Dr. Meena Shukla
Dr. Nirmala Kulkarni
Dr. Roy Gauri Nath
Dr. Tripathi Uma Rani
Dr. Pushpa Jha
Dr. Basu Ratna
Dr. Mithilesh Kumar
Prof. Singh Prasoon Dutta
Shri. Mishra Arun Ranjan
Dr. Mishra Baidyanath
Dr. Tripathi Rajendra Rasraj
Shri. Harshdev Madhav
Dr. Kamdev Jha
Dr. Parinita Deshpande
Dr. Jha Udayanath (Ashok)

# पुरोवाक्

आत्यन्तिकदुःखनिवृत्तिः परमानन्दावाप्तिश्च मोक्षः इति प्रथितमेव मोक्षलक्षणं विदितवेदान्ततत्त्वानां सम्प्रदायेति। अतः आत्यन्तिकी दुःखनिवृत्तिः कथं भवेत् इति जिज्ञासया प्रेरितः सर्वोऽपि जीवराशिः तादृश दुःखशोकादि निवृत्तिहेतुभूतं तत्त्वं लब्धुयतमानः दृश्यते। तत्रैव तत्त्वान्वेषणपरस्य श्रद्धावतः तत्परस्य संयतेन्द्रियस्य च परमकरुणाप्रेरिताचार्थ दर्शनलाभ महता भाग्येन भवति। तत्रैव संशयग्रस्तस्यास्य दुःखशोकाभिभूतान्तःकरणस्य बुबोधयिषया प्रवृत्तः तत्त्ववित् तस्मै ज्ञानमुपदिशति। तेनैव च परमकारुणिकेन तत्त्वदर्शिना आचार्येण प्रदत्तं ज्ञानं कार्यक्षमं भवति। ज्ञानादेव च सर्वकर्माग्निना दग्धं सत् निःशेषकर्मा **अहं ब्रह्माऽस्मि** इत्यनुभवे स्थितः सर्वदुःखविनिर्मुक्तो स्वानन्दसृप्तश्च मुक्तः भवति।

ऋते ज्ञानान्नमुक्तिः, ज्ञानादेव तु कैवल्यम्, तमेव विदित्वा अतिमृत्युमेति, भिद्यते हृदयग्रन्थिः, तरतिशोकमात्मवित्, इत्याद्याः श्रुतयः ज्ञानं मोक्षसाधनत्वेन उपदिशन्त्यः दृश्यन्ते। अतः आगमाचार्याभ्यामुपदिष्टतत्त्वज्ञानसाक्षात्कारविशिष्ट एव ज्ञानवान् विमुक्तो भवति इति ज्ञायते। तादृशं श्रुतिसिद्धं ज्ञानं स्वविशिष्येभ्यः प्रदातुं समुत्सुकाः परमकरुणालवः शाङ्कररामानुजवाल्लभानां समुद्धिधीर्षया प्रवृत्ताः शङ्कररामानुजवल्लभाचार्याः बादरायणव्यासप्रणीतस्य श्रुतिः (उपनिषत्), भगवद्गीता, ब्रह्मसूत्राणि इत्याख्य प्रस्थानत्रयान्यतमस्य सूत्रग्रन्थस्य

भाष्यव्याख्यानादिकञ्चक्रुः। तेषां भाष्यमधुरिमाकृष्टाः शिष्याः तत्तत् दर्शनस्यानुगुणं स्व -स्व सम्प्रदायानुसरणं कुर्वाणाः मुक्तिं लब्धवन्तः इतिक्षः प्रत्यक्षम्। तर्हि केऽयं मुक्तिः, मुक्त्यवस्था वा इति चेत् कर्तृत्वभोक्तृत्वाभिमान- रहितावस्था, वासनानाशोत्तरमुपपन्ना अवस्था वा मोक्षावस्थेति। अतस्तामवस्थामवाप्य सर्वेऽपि अधिकारिणः शिष्याः तत्त्वाधिगमात् मोक्षं गताः। तच्च तत्त्वज्ञानं तत्तत् आचार्य प्रणीतं समधिगन्तुं शक्यं पारंपरिकाध्ययनमात्रेण। अथापि तेषां मतसमीक्षणमत्र तत्तत् दर्शनानुसारेण चिन्तनप्रकारमालोयता मया व्यधायि। तदत्र आपाततो निर्दिदिक्षे। आरम्भे दर्शनत्रयपरिचयं प्रदाय तेषां मतसमीक्षा परं कृतैव वर्तते अस्मिन् ग्रन्थे इति। केवलं चतुस्सूत्र्यन्तभाष्यस्य अत्रापतितः विचारः दर्श्यते।

**चतुस्सूत्री -**

ब्रह्मसूत्रेषु बादरायणव्यासविरचितेषु विविधैः आचार्यैरधिगतेषु सत्सु तेषां सङ्ख्याविषये वादः वर्तते। अथापि आदिमसूत्रचतुष्टयं शाङ्कररामानुजमतयोः, त्रिसूत्री त वाल्लभमतानुसारिणी समाना एव।

**अथातो ब्रह्मजिज्ञासा**, इत्यारभ्य **तत्तुसमन्वयात्** इत्यन्तभागः चतुस्सूत्री इति नाम्ना प्रसिद्धः वर्तते। अत्र प्रथमसूत्रेण ब्रह्मणः जिज्ञासा कर्तव्या इति प्रोक्तं - द्वितीयेण च तल्लक्षणं जगज्जन्मस्थितिलयकारणत्वम्, तृतीयेन तस्य शास्त्रप्रमाणकत्वं, तद्विदः शास्त्रस्वरूपत्वं, तस्यैव शास्त्रकारणत्वं वा प्रतिष्ठाप्य, तुरीयेण समन्वयसूत्रेण तस्य तत्पर्येण श्रुत्या अवगमो भवति इति निरूपितम्। वस्तुतः कार्यकारणयोरनन्यत्वप्रतिपादने एव सर्वेषां भाष्यकाराणां प्रवृत्तिः।

तत्र तन्निरूपणे विलक्षणप्रतिभावशात् भाष्यकाराणां प्रवृत्तिः। तत्र तन्निरूपणे विलक्षणप्रतिभावशात् भाष्यकारेषु भेदः यद्यपि दृश्यते तथापि एकं ब्रह्म इत्ययमंशः न कस्यापि विप्रतिपद्यते।

**ब्रह्म -**

नारायणः महाविष्णुः एव ब्रह्म इति वा, श्रीकृष्णः, एव ब्रह्म इति वा, सगुणनिर्गुणभेदेन ब्रह्म द्वैविध्यं प्रतिपाद्यवस्ततः निर्गुणमेव इति वा तस्य स्वरूपं निर्णीतं स्यात्।

तत्स्वरूपविनिश्चयस्तु, ब्रह्मस्वरूपनिर्णयस्तु न सामान्यया, न वा विशेषञ्च। प्रज्ञया भवितुं शक्यः। अतः बुद्धिगम्यत्वं ब्रह्मणः नास्ति। इत्यतः यद् शास्त्रोक्तं सदसद्भ्यामगोचरं - सत् - नामारूपात्मकम् असत् - तन्नामरूपादिरहितं तत् **अस्थूलमणनु....** इत्यादि श्रुतिसिद्धं तावन्मात्रमुक्त्वा, तत् तत् सम्प्रदायोक्त साधनानुष्ठनमात्रेण तत् साक्षात्कर्तुं शक्यमिति उक्त्वा ब्रह्मस्वरूपनिरूपणव्यापारात् विरममः।

तदेव च ब्रह्माख्यं तत्त्वमौपनिषदमुपन्निषद्वाक्यतात्पर्यादवधृतं समन्वयसाधनेनाधिगन्तुं शक्यमिति हेतोः उपनिषद्वाक्यानां तात्पर्य निदर्शनाय सूत्राणीमानि बादरायणव्यासप्रणीतानि प्रवृत्तानि अत्र, सूत्राध्ययनमाध्यमेन वेदान्तवाक्यविचारः विधीयते। उक्तञ्च - **वेदान्तवाक्यानि हि सूत्रैरूदाहृत्य विचार्यन्ते। वेदान्तवाक्यकुसुमग्रन्थनार्थत्वात् सूत्राणाम्।** इत्यादि। तेभ्यः च वाक्येभ्यः आत्मैकत्वविद्याप्रतिपत्तिः, नारायणः विष्णुः, श्रीकृष्णः ब्रह्म इत्याद्याकाश काचिद्वा निश्चयात्मिका वृत्तिरस्माकं भूयादेव तदैव कर्ताऽसौ, नाऽहं कर्तेति बोधः स्यात्। सा एव च कर्मयोगज्ञानयोगयोरस्ति भूमिका। अतः भाष्यकारत्रयप्रथितभाष्य समालोचनेन, समग्रसूत्रभाष्यस्य हृदयस्थानीययाः

चतुस्सूत्र्याः समधिगमनालोचनालोडनादिना समेषामस्माकं भूयात् भगवदभिन्ना, तत्सख्यदासादिभक्तिभावयुता वा बुद्धिः तथैव ग्रन्थोऽयं स्यात् श्रेयस्ते सर्वजनानामिति कामये। कामये च अद्वैतविशिष्टाद्वैतशुद्धाद्वैतदर्शनशास्त्र प्रविविशूमां सारल्येन सुलभतया चावबोधजननक्षमः ग्रन्थोऽयं भवत्विति। भगवतः चरणारविन्दयोः प्रार्थये च मानसमरविन्दं समर्पयन्।

ततश्च ग्रन्थस्यास्य प्रकाशनार्थमनुमतिं प्रदाय अन्वगृहन् कविकुलगुरुकालिदास विश्वविद्यालयस्य कुलगुरवः आचार्यः श्रीमन्तः श्रीनिवासवरखेडिमहाभागाः। तेभ्यः गुरुभ्यः सविनयं नमस्कारपूर्वकं हार्दान् धन्यवादान् वितनोमि।

पुस्तकलेखनस्य प्रेरणां दत्त्वा सर्वतोपरि मार्गदर्शनं कृत्वा इदं लेखनकार्यं पूर्णतां नीतवन्तः, आचार्याः.मधुसूदनपेन्ना महाभागाः, आचार्याः,डा. दिनेशरसाळ महाभागाः, डा. दिनकर मराठे महाभागाश्च अतः प्रणतिततिं निवेदयन् सादरं नमस्कारं करोमि।

अत्यल्पकाले टङ्कणादिसमग्रं कार्यं कृत्वा सहकार्यं कृतवद्भ्यः श्रीमद्भ्यः डा.ए.चारुकेश महाभागेभ्यः प्रीतिपूर्वकं धन्यवादान् वितनोमि। तथैव परोक्षापरोक्षरूपेण सहकार्यं कृतवद्भ्यः सर्वेभ्यः धन्यवादाः।

**शाङ्कररामानुजवाल्लभवेदान्तत्रयपरिचयः चतुस्सूत्र्यन्तभाष्य समीक्षा च**

**लेखकः**

**आयाचित शन्तनु अम्बादासराव**

# दर्शनत्रयपरिचयः

समस्तेऽस्मिन् प्रपञ्चे आध्यात्मिकाधिभौतिकाधिदैविकानि दुःखानि समनुभवन्तः प्राणिनः, दुःखसमुदायादस्मात् स्वोद्दिधीर्षया प्रवृत्ताः, दुःखस्यापाकरणसाधनं समीहमानाः पन्थान्वेषणं कुर्वन्ति। तदा प्रत्यक्षादिप्रमाणपुरस्सरं क्रियमाणे अन्वेषणे प्रथमतः दर्शनानि एव तत्पुरतः अवतिष्ठन्ते। तर्हि किं नाम दर्शनमिति संदेहः मनसि स्यादेव अतस्तं संशयमपाकृत्य अग्रे निरूपयिष्यामः।

**❋ दर्शनम् -**

दर्शनमिति शब्दः दृश् धातोः **करणाधिकरणयोश्च**[१] इति सूत्रेण करणार्थे ल्युट्प्रत्यये कृते, **युवोरनाकौ**[२] इति सूत्रेण यु स्थाने अनादेशे उत्पन्नः। अतः अस्यार्थः दर्शनसाधनम्। सर्वेषु प्रमाणेषु प्रत्यक्षप्रमाणस्य प्राबल्यं सर्वदार्शनिकसम्मतमेव। सर्वेषु इति प्रयोगेण अन्यानि अपि प्रमाणानि सन्ति इति निश्चितमेव अवगच्छामः। अथापि चक्षुषा श्रोत्रेण वा गृहीतस्य अर्थस्य ग्राहकं चक्षुरादीन्द्रियं मुख्यां प्रमाणतामावहतीति न केनापि निराकर्तुं शक्यम्। अतस्तेषां दर्शनसाधनभूतानां चक्षुरादीन्द्रियाणां तदितराणाञ्च प्रमाणानां विचारः यत्र क्रियते, यस्मिन् शास्त्रे तेषां प्रामाण्यपरिधिनिश्चयो विधातुं शक्यः तत् दर्शनशास्त्रमिति औपनिषद्तत्त्व-ज्ञानरहिताः व्याख्यान्ति। अस्यार्थः यत्र प्रमाणप्रमेय प्रमित्यादि विचारः भवति तत् दर्शनशास्त्रम् इति तेषामभिप्रायः। अत्रेदं प्रतिफलति - केवलं युक्तियुक्तं, तर्कात्मकं ज्ञानं यत्र भवति तत् दर्शनमिति।

औपनिषदां मते तु - यच्छास्त्रं मोक्षं प्रतिपादयति, यत्र आत्यन्तिकदुःखनिवृत्तेः साधनं स्वरूपञ्च उपदिष्टमस्ति तत् वैदिकपन्थानमनुसरत् विद्यमानं शास्त्रमेव दर्शनम् इति शब्देन वाच्यमिति। तथा चेद्वेदान्तशास्त्रस्यैव मोक्षप्रतिपादकत्वात् दर्शनत्वमिति निश्चेतुं प्रभवामः।

इत्थं दर्शनस्य मोक्षानुगामिनी प्रवृत्तिरस्ति इत्यङ्गीकारे कृते दर्शनानां बीजं वयमन्वेष्टुं प्रवर्तामहे।

दुःखत्रयनिवृत्तिहेतुविषयिणी जिज्ञासा एव बीजम् इति चेत् सत्यं, जिज्ञासा एव बीजम्। अथापि शास्त्रात्मना तद्विचारस्य, ग्रन्थादिषु ग्रथनमेव अत्र विचार्यमिति ब्रूमः।

भारते विचारोऽयमावेदकालात् वर्तमानः प्रचलितश्च। भौतिकजगद्विषयिणी दर्शनान्तर्गता चर्चा अपि भौतिकस्य जगतः, यत् कारणं तन्मात्रं सत्यमिति सिद्धान्ताधारिता एव, अतः वैदिकविषयेष्वाकृष्टचेतसां बाह्यप्रपञ्चनिष्ठसत्यत्वबोधिका दृष्टिः न आसीदिति भावयामः। अथापि दृश्यस्य सत्यत्ववादिनां सम्प्रदायानां सत्वे कथमिदमुच्यते इति चेत् - तदग्रे समीक्षा समये एव विचारयिष्यामः। प्रकृतं तु वेदकालादेव विचारोऽयं प्रवृत्तः इति।

**❊ वेदभाषा संस्कृतभाषा -**

वेदाः कस्यापि धर्मस्य, पन्थस्य वा सन्तीति न क्वापि वेदे प्रसिद्धिः। न च वेदभाषा संस्कृतभाषा अपि कस्यचित् समुदायस्य एव इति प्रथा। न च वेदोक्तः धर्मः केनचिदतिक्रमणीयः।

स्यादेतत् - वेदानां भाषा संस्कृतभाषा वर्तते। इयमत्यन्तं प्राचीना वाक् देवभाषा इत्यपि व्यवह्रियते। अस्यां भाषायां विद्यमानाः वेदाः

अत्यन्तं महत्त्वमावहन्ति वेदेषु सत्यं निगूहितमस्ति। संस्कृतभाषायाः अपि माहात्म्यं वेदभाषात्वादेव इति ब्रूमः।

वेदानां कालविषयिणी चर्चा अपि आधुनिकैः विद्वद्भिः कृता वर्तते अथापि अस्वारस्यं तेषामनुमानादिषु वर्तते। वेदः परमपुरुषस्य परमेश्वरस्य निःश्वासोत्पन्नः, लोकवन्न पौरुषेयः इति श्रद्धां कुर्मः।

### ❊ वेदानां भागद्वयम् -

मन्त्रब्राह्मणयोः वेद नामधेयम्। इति आपस्तम्बोक्तेः मन्त्रब्राह्मणात्मको वेद इति सिद्ध्यति।

मन्त्राः इत्युक्ते - प्रयोगसमवेतार्थस्मारकः वेदराशिः।

ब्राह्मणं नाम - मन्त्रार्थविवरणात्मको भागः।

वेदानां पुनर्द्विधा भागः। ज्ञानकाण्डं, कर्मकाण्डमिति। कर्मकाण्डे - कर्मणामग्निहोत्रादियागाणां प्रक्रिया उक्ता वर्तते। ज्ञानकाण्डे तु उपनिषदादिषु ज्ञानान्मोक्षः कथं स्यादिति विचारः कृतः। ज्ञानमेव कैवल्यसाधनमिति निश्चयः प्रदर्शितः। **ज्ञानादेव तु कैवल्यम्**[१] **। ज्ञानाग्निः सर्वकर्माणि भस्मासात् कुरुतेर्जुन**[२] इत्यादि श्रुतिस्मृतेः। उपनिषद् भाग एव वेदानामन्तत्वेन गीतः। अन्तत्वेन निश्चायकत्वेन इत्यर्थः।

तथा च - प्रत्यक्षादिप्रमाणपुरस्सरं कृतस्यान्वेषणस्य उपनिषद् ग्रन्थेषु इतिश्रीः परिसमाप्तिर्वा मन्तव्या।

अर्थात् प्रत्यक्षादिप्रमाणपुरस्सरं कृतमन्वेषणं प्रत्यक्षादिप्रमाणसिद्धं साधनमल्पफलदं, आत्मज्ञानिभिः प्रोक्तं, वैदिकमौपनिषदञ्चात्मज्ञानफलदमा-त्मज्ञानात्मकं साधनं नित्यफलदम् इति निश्चयं प्राप्य सर्वे धीराः धीमन्तः,

विवेकिनः, तन्मार्गानुगनमारभन्ते। शास्त्रे प्रमाणप्रमेयविचारः इति मोक्षमार्गे प्रस्थितस्य प्रथमं सोपानमुक्तं वर्तते। ततः अग्रे तु अमानित्वादिगणाभ्यासः एव मुख्यः। तद्विषयकः विचारः यत्र न भवति तस्य दर्शनशास्त्रात्मना मोक्षशास्त्रात्मना वा ग्रहणं भवतु इति नाऽस्माकमाग्रहः। स्यादेतत्।

इतश्च आत्मानात्मविवेकिनां फलमाशु सिद्धं भवतु इति मनीषया मनीषिणः ज्ञानिनः प्रस्थानत्रयं कल्पयामासुः। त्रिविधं प्रस्थानं शास्त्रेण प्रदर्शितं वर्तते। तत्र प्रस्थानत्रयं परिचाययामः।

## ❊ प्रस्थानत्रयम् -

प्रस्थानत्रयं प्रस्थानत्रयीति नाम्ना अपि व्यवहारे वर्तते। तत् प्रस्थानत्रयं, भगवद्गीता, उपनिषदः, ब्रह्मसूत्राणि च। भगवत्पादाः श्रीमच्छङ्कराचार्याः उपनिषदां, श्रीमद्भगवद्गीतायाः, ब्रह्मसूत्राणाञ्च भाष्यं रचितवन्तः। तदेव प्रस्थानत्रयभाष्यम् इत्यपि प्रथितम्। एतत् भाष्यं सर्वैरपि दार्शनिकैः आचार्यैः विहितं वर्तते। ततः परं प्रस्थानत्रयमिदमधिकारिभेदेन अनुष्ठानयोग्यतां प्राप्नोति। उपनिषत् प्रस्थानमुत्तमा-धिकारिणां कृते, ब्रह्मसूत्रप्रस्थानं मध्यमाधिकारिणां कृते, भगवद्गीताप्रस्थानं साधकानां, वेदान्तानुष्ठायिणां कृते इति भेदं कर्तुं वयं प्रभवामः।

## ❊ उपनिषद् प्रस्थानम् -

उपनिषदः भारतीयतत्त्वज्ञानस्य मूलाधारभूताः इति निश्चितं मतं प्रेक्षावत्समाजे प्रसिद्धम्। उपनिषत्सु विद्यमानाः धर्माः एव परवर्तिकाले सर्वेष्वपि उत्तमोत्तमेषु काव्येषु औचित्यभाजनानि अभूवन्। उपनिषद्वेद्यस्य तत्त्वस्य सारसंग्रहः भगवद्गीतायां कृतः वर्तते।

उपनिषत् शब्दनिर्वचनं भगवत्पादैः शङ्कराचार्यैः उपनिषद्भाष्ये बहुषु स्थानेषु कृतं वर्तते। तत्र काठकोक्तां व्युत्पत्तिं प्रदर्शयामः - **सदेर्धातोः विशरणगत्यवसादनार्थस्योपनिपूर्वस्य क्विप्प्रत्ययान्तस्य रूपमुपनिषदिति।**[१] अतः अविद्यादेः संसारबीजस्य विशरणात्, विशरणं हिंसा हिंसनात्, विनाशनात्, परं ब्रह्मगमयितृत्वात्, अग्निविद्यारूपत्वात् वा उपनिषद् प्रतिपाद्या विद्या ब्रह्मविद्यात्वेन व्यवह्रियते। तस्मादुपनिषद् शब्दोऽपि विद्यावाचि इति स्थिरम्।

उपनिषद् धर्मानुष्ठानप्रिया एव लोके वैरल्येन लभ्यन्ते। ये तदनुष्ठायिनः तेषाम् उपनिषत्प्रतिपाद्यपुरुषविषयिणी जिज्ञासा सर्वदा भवति। अत एव बृहदारण्यकेऽपि उपनिषत्पुरुषविषये एव विचारः विहितः। तदुक्तं - तं त्वौपनिषदं पुरुषं पृच्छामि इति।[२] अत्राहुः भाष्यकाराः - **स्वेनैवात्मना व्यवस्थितो यः औपनिषदः पुरुषोऽशनायादि वर्जितः उपनिषत्सु एव विज्ञेयो नान्यप्रमाणगम्यः**[३] इत्यादि उक्तञ्च यत् - **उपनिषत्सु धर्माः ते मयि सन्तु**[४] इति। अतः अनितरसाधारणं महत्त्वमावहतीदमुपनिषत्प्रस्थानम्।

**❊ भगवद्गीता प्रस्थानम् -**

भगवद्गीता महाभारतस्य भीष्मपर्वणि प्राप्तं मूल्यवत् रत्नम्। भगवद्गीतायाः माहात्म्यं किन्निमित्तमिति जिज्ञासा अल्पमतीनां भवत्येव। वेदापेक्षयापि गीता किमर्थं विशेषतामावहतीति नः संशयः। तत्रेदं चिन्त्यं - वेदाः पुरुषनिःश्वाससमात्रोत्पन्नाः, गीता तु भगवतः मुखारविन्दान्निःसृतम् औपनिषदस्य तत्त्वज्ञानस्य सारभूतं, प्रधानं तत्त्वमेव।उक्तञ्च -

**सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः।**
**पार्थो वत्ससुधीर्भोक्ता दुग्धं गीतामृतं महत्।।**[१]

दुग्धमित्यस्य दोहितमित्यर्थः।

भगवद्गीतायाः प्रचारः प्रसारश्च सर्वेषु लोकेषु अत्यधिकः वर्तते। भगवद्गीताप्रस्थानं साधकानां दृष्ट्या अत्युत्तमम्। वस्तुतः साधकः उपासको वा उपासनया यावत् ज्ञानं सम्पादयति न तावत् अध्ययनादिना सम्पादयितुं मेधाविनाऽपि शक्यते। अतः गीतोक्तमार्गानुगामि साधकः क्षिप्रमेव मुक्तिं प्राप्तुमर्हति तस्मात् गीता प्रस्थानं मुख्यतामावहति।

**❊ सूत्रप्रस्थानम् -**

ब्रह्मसूत्रप्रस्थानं प्रस्थानत्रये नितरां विशेषतामावहति। ब्रह्मसूत्राणां रचयिता भगवान् बादरायणव्यासः प्रथितः। ब्रह्मसूत्राण्येव शास्त्रे शारीरिकसूत्राणि, व्याससूत्राणि इत्यादिनामभिः व्यवह्नियन्ते। सूत्रग्रन्थे भगवान् बादरायणः संक्षेपेण वेदान्तविषयं सङ्गृहितवान्। तस्य विषयस्य संग्रहेण उपस्थापितस्य विचारः न्यायमार्गेण कर्तव्य इति हेतोः भगवता भाष्यकारेण तद्व्याख्यानं व्यधायि। उक्तञ्च- तस्मात् ब्रह्मजिज्ञासा उपन्यासमुखेन वेदान्तवाक्यमीमांसा तदविरोधितर्कोपकरणा निःश्रेयसप्रयोजना प्रस्तूयते।[१] तस्मात् सूत्रप्रस्थानं महत्त्वमावहति। उक्तञ्च -

**श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।**
**मत्त्वा च सततं ध्येयः इति दर्शन हेतवः।।**[२] इति।

अतः प्रस्थानत्रयमिदं मोक्षमार्गानुगामिनामात्मैकत्वनिश्चयात्मिकां विद्यां निष्पादयितुं महत् योगदानं करोतीति मन्महे। तदत्र सूत्रप्रस्थाने ब्रह्मसूत्राणां भाष्याणि यावन्ति विषयविवेचनार्थं सापेक्षतामावहन्ति तेषां परिचयः प्रदास्यते।

## ❊ अद्वैतवेदान्त परिचयः -

### पीठिका -

भारतीयदर्शनमिति शब्दश्रवणमात्रेणाद्वैतवेदान्तदर्शनमस्मत् बुद्धिमधिरोहति। एतस्याद्वैतवेदान्तदर्शनस्य प्रवर्तकाः शङ्करभगवत्पादाः इति प्रसिद्धिः। वस्तुतस्तु प्राचीनस्यैव वेदान्तमतस्य मतान्तरसङ्करकारणात् मलिनतां प्राप्तस्य शुद्धीकरणमात्रं भगवत्पादैः विहितम् इति मन्महे। आत्मतत्त्वसाक्षात्कारपर्यन्तमेव वेदादीनां प्रामाण्यमिति अङ्गीकुर्वद्भिः शङ्कराचार्यैः – **ब्रह्मसत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः** इति जीवब्रह्मणोः एकत्वविषये डिण्डिमः कृतः। जीवस्तु ब्रह्मैव इति ते वदन्ति। भक्तिकर्मणोः सहकारिकारणत्वं मोक्षं प्रति विद्यते चेदपि ज्ञानादेव मोक्षः सम्भवति नान्यथा। ज्ञानञ्च अहं ब्रह्माऽस्मि इत्याकारकमेव अतः ज्ञानस्य मोक्षसाधनत्वमुपनिषदादि प्रस्थानत्रयसिद्धमेव शङ्कराचार्यैः स्वीये भाष्ये उपस्थापितं वर्तते। इतश्चास्याद्वैत सम्प्रदायस्येतिहासं पश्यामः –

## ❊ अद्वैतदर्शनस्येतिहासः -

वेदान्तप्रमाणैकवादिनः अद्वैतिनः इति प्रसिद्धिः। श्रुतिमात्रैकशरणता अद्वैतिनां दृश्यते। शङ्करभगवत्पादानां प्रागपि ब्रह्मसूत्राणां भाष्याणि आसन्नेव अथापि तत्र विशेषतः तत्त्वनिर्णयः न कृतः आसीत् अतः भगवान्भाष्यकारः अविद्यानिवृत्तये भाष्यं रचयाञ्चकार। अनेनैव ज्ञायते भाष्यकारात् प्राक्तनकाले अपि अद्वैतसिद्धान्तपोषकाः आसन् इति। उपनिषदः, भगवद्गीता, ब्रह्मसूत्राणि इति क्रमः प्रस्थात्रयस्य वर्तते। अस्मिन्नेव क्रमे गौडपादकारिकाः पुराणानामन्तरं स्थानं प्राप्नुवन्ति। माण्डूक्योपनिषत्कारिकाः गौडपादाचार्यैः विरचिताः सन्ति। तासु कारिकासु एव मायावादस्य

शङ्कराचार्योपस्थापितस्य बीजमुपलभ्यते इति विचारकाः निगदन्ति। ताः चतुर्षु प्रकरणेषु विभक्ताः – तद्यथा – आगमप्रकरणम्, वैतथ्यप्रकरणम्, अद्वैतप्रकरणम्, अलातशान्तिप्रकरणञ्च।

सर्वेऽपि अद्वैतवेदान्ताभिमानिनः कारिकासु प्रदर्शितसिद्धान्तस्वारस्येन एव भगवान् भाष्यकारः भाष्यं चकार इति विश्वसन्ति। इत्थमद्वैतसम्प्रदायस्य शङ्कराचार्याणामागमनपर्यन्तः इतिहासः सङ्क्षेपतः ज्ञातः।

**❊ अद्वैतमिति शब्दार्थः -**

अद्वैतमिति शब्दः माम्डूक्योपनिषदि प्रथमं श्रुतः – **शिवमद्वैतं चतुर्थं मन्यन्त** इति।[१]

अद्वैतमिति पदे **न द्वैतमद्वैतम्** इति विग्रहः न युक्तः इति, द्वैतनिषेधमात्रत्वं विविक्षाविषयमिति मन्यमानाः अभिप्रयन्ति। श्रुतिः द्वैतं निषिध्य अद्वैतमुपस्थापयति – यथा – **नेह नानाऽस्ति किञ्चन**[२] इति।

अतोऽद्वैतमिति पदे **न विद्यते द्वैतमस्मिन्** इति विग्रहः वाच्यः। न द्वैतमिति पूर्वोक्तविग्रहे प्रसक्तं द्वैतं निषेधविषयमिति भ्रमः स्यादतः, अविद्यमानमेव द्वैतं विद्यमानमिव भासमानं निषिध्यते इति द्वितीयेन विग्रहेण अर्थावगमः कार्यते। स च युक्त एवेति अस्मन्मतिः।

**अद्वैतदर्शनम् -**

अद्वैतवेदान्ते ब्रह्म एकमेव नित्यशुद्धबुद्धमुक्तस्वभावं पारमार्थिकं सत्यमिति अङ्गीक्रियते। जीवोऽपि उपाधि परिच्छिन्नः इति व्यावहारिकदशायामुच्यते, परमार्थतः जीवोऽपि ब्रह्मैव। जीवस्य ब्रह्मणो वा कर्तृत्वाद्यभिमानः उपाधिनिमित्तः। स च उपाधिः माया, अविद्या इत्यादि

शब्दैः व्यवह्रियमाणः शास्त्रे उपलभ्यते। **अद्वैतं परमार्थतः**[3] इति वदद्भिः गौडपादाचार्यैरपि अद्वैतमद्वितीयं ब्रह्म एव परमार्थतः वर्तते इति निरूपितं वर्तते। अद्वैतमिति शब्दस्य मुख्यतः ब्रह्मवाचकत्वं गौण्यया वृत्या शास्त्रग्रन्थनिदर्शकत्वमिति विवेकः कार्यः। अद्वैतदर्शने ब्रह्मातिरिक्तस्य समग्रस्यापि मायिकत्वं, मायावत्वात् मिथ्यात्वं प्रतिपाद्यते। इदमेव वैशिष्ट्यमत्र प्रपश्यामः।

### ❊ अद्वैतवेदान्ताचार्य परम्परा -

अद्वैतवेदान्तदिशा शङ्करभगवत्पादपर्यन्ता आचार्य परम्परा तथैव अद्वैतवेदान्त-दर्शनस्य आचार्य परम्परा अद्वैतवेदान्तदर्शनस्य इतिहासदर्शनावसरे एव अवलोकिता। तत्परं पश्यामः – गौडपादाचार्याणां शिष्याः गोविन्दभगवत्पादाः आसन्। तेषां शिष्याः शङ्करभगवत्पादाः अभूवन्। शङ्कराचार्याणां शिष्याः सुरेश्वराचार्याः, पद्मपादाचार्याः, हस्तामलकाचार्याः, तोटकाचार्याः च अभूवन्। तेषु पद्मपादाचार्याः पञ्चपादिकां विरचय्य सूत्रभाष्यं गभीरतया व्याख्यातवन्तः। सुरेश्वराचार्याः बृहदारण्यकादीनामुपनिषद्भाष्याणां वार्तिकानि लिखितवन्तः। ततः सर्वे पञ्चपादिकाप्रस्थानानुयायिनः सञ्जाताः। किन्तु भाष्यप्रस्थानमेव मोक्षमार्गानु-यायिनामात्मैकत्वनिश्चये सहाय्यभूतमिति न नः संशयः।

तत्र चोक्तं परम्परा विषये – सदाशिवसमारम्भां शङ्कराचार्यमध्यमाम् अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम्।

### ❊ आद्यशङ्कराचार्यः -

भक्तवत्सलः, भक्तरक्षणतत्परश्च भगवान् अवनीमाविर्भूय सज्जनपरित्राणं दुर्जनसंहरणञ्च विदधाति युगे युगे इति श्रद्धां कुर्वन्ति

सर्वेऽपि भगवत्भक्ताः। आचार्यः शङ्करः अपि भगवतः विभूतिः एव इति मन्यमानाः श्रद्धावन्तः जनाः केरलप्रदेशस्थे कालडी ग्रामे शिवगुरोः विशिष्टादेव्याश्च पुत्रात्मना भगवानेवावतीर्य अज्ञानावृतचेतसां मोक्षमार्गं प्रदर्शयितुमिच्छन् व्याससूत्रादीनां भाष्यञ्चकार इति अभिप्रायन्ति। चन्द्रमौलीश्वरकृपया सञ्जातः अल्पायुः पुत्रः अत्यन्तं विद्वान् आसीत्। तस्य वैदग्ध्यवर्णनं कर्तव्यं चेत् -

**अष्टवर्षे चतुर्वेदी द्वादशे सर्वशास्त्रकृत्।**

**षोडशे कृतवान् भाष्यं द्वात्रिंशे मुनिरभ्यगात्।।**

भगवत्पादाः स्वगुरोः गोविन्दपूज्यपादस्य अत्यन्तमुत्तमाः शिष्याः आसान्निति तेषां **सह नाववतु** इत्यादि शान्तिमन्त्रभाष्येनापि स्पष्टं बुद्ध्यते। आचार्यः कृतार्थः भवतीति ते व्याख्यान्ति।

स्यादेतत् - भगवत्पादाः षोडशे वयसि भाष्यरचनां कृतवन्तः। तस्य भाष्यस्य प्रसारः अग्रिम षोडशवर्षेषु सञ्जातः। तैः कृताः ग्रन्थाः लोकोद्धारकाः सन्तीत्यत्र विदुषामैकमत्यम्। ज्ञानं - भक्तिः - वैराग्यम् इत्यादेः अनुष्ठानं भाष्यकृद्दिशा क्रियमाणं संसारमहोदधेः उद्धारं करिष्यतीति नः श्रद्धाविषयः।

शङ्करभगवत्पादानां ग्रन्थसम्पत् -

१. प्रस्थानत्रयभाष्यम्।

२. विष्णुसहस्रनामभाष्यम्।

३. सनत्सुजतीयभाष्यम्।

४. ललितात्रिशतीभाष्यम्।

५. माण्डूक्यकारिकाभाष्यम्।

६. सौन्दर्यलहरी।

७. अपरोक्षानुभूतिः।

८. स्तोत्रसाहित्यम्।

९. प्रकरणग्रन्थाश्च। इत्याद्याः।

**❋ ब्रह्मसूत्रभाष्यम् –**

इदं हि महर्षिबादरायणप्रणीतचतुरध्यायात्मकसूत्राणां भाष्यमस्ति। इदमेव भाष्यं यस्मात् आचार्यशङ्करस्य दार्शनिकजगति अक्षयरूपा कीर्तिः राराजते। इदं हि **शारीरकं** भाष्यम् इत्यभिधीयते। शारीरकम् इत्यस्य व्युत्पत्तिः रत्नप्रभायाम् इत्थं प्रदर्शिता – शरीरमेव शारीरकं कुत्सितत्वात् तन्निवासी शारीरको जीवः, तस्य ब्रह्मत्वविचारो मीमांसा। अर्थात् **शरीरादेव कुत्सिते**[१] इति पाणिनीयसूत्रेण निन्दार्थे, कुत्सार्थे (शरीरस्य नश्वरत्वात्) क प्रत्यये कृते **शारीरकम्** इति रूपं सिद्ध्यति। तत्रस्थः शारीरकः जीवः तद्विषयको विचारः यस्मिन् ग्रन्थे सोऽपि ग्रन्थः शारीरकः इति कथ्यते।

**❋ ब्रह्मसूत्रस्य नामकरणम् –**

वस्तुतः द्विधा हि सूत्रग्रन्थानां नामकरणम्। एकं तु विषयदृष्ट्या द्वितीयं तु ग्रन्थकारस्य नाम्ना इति। ग्रन्थे प्रतिपाद्यविषयमाधारीकृत्य ग्रन्थस्य नामकरणं क्रियते। यथा – साङ्ख्यसूत्रम्, न्यायसूत्रम्, योगसूत्रम् इत्यादि। अन्यद् तु ग्रन्थकारस्य नाम्ना ग्रन्थस्य नामकरणं क्रियते। यथा– पाणिनिसूत्रं, जैमिनीसूत्रं, कात्यायनसूत्रम् इत्यादि।

ब्रह्ममीमांसा ग्रन्थेऽस्मिन् कृता वर्तते। मीमांसा नाम पूजितविचारः। अतः ब्रह्मविषयकविचारः प्रस्तुतग्रन्थे कृतो वर्तते। तस्मात् विषयदृष्ट्या एव

अस्य ग्रन्थस्य ब्रह्मसूत्रमिति नामकरणं कृतं विद्यते।

❊ **ब्रह्मसूत्रस्य स्वरूपम् –**

**लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च।**
**सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः ।।**

**अल्पाक्षरमसन्दिग्धं सारवद्विश्वतो मुखम्।**
**अस्तोभयमनवद्यं च सूत्रं सूत्रविदो विदुः ।।**

इमानि च भवन्ति सूत्रलक्षणानि। तर्हि किमिमानि सूत्रलक्षणानि ब्रह्मसूत्रस्थानि सूत्राणि लक्षयन्ति उत न इति चेत् उच्यते यद् ब्रह्मसूत्रस्थानि सर्वाण्यपि सूत्राणि सूत्रलक्षणसमन्वितान्येव नात्र कोऽपि संशयः।

वस्तुतः एतानि सूत्राणि रचयितुं किं वा प्रयोजनं स्यात् इत्यत्र कथ्यते यत् उपनिषदः एव एतेषां सूत्राणां रचनार्थमुपोद्बलकत्वेन स्वस्थानं निर्वहन्ति। एतैः सूत्रैः नूतनतया किमपि न प्रतिपाद्यते अपि तु श्रुतीनामेव यथार्थविवेचनं क्रियते। **वेदान्तो नामोपनिषत्प्रमाणम्**[१] इत्याचार्याः। उपनिषद् तु वेदभागः अर्थात् वेद एव। अतः न तावदल्पबुद्ध्या तस्य वेदभागस्य उपनिषदः यथार्थज्ञानं सहजतया भवितुमर्हति तस्मात् अस्य उपनिषद्भागस्य यथार्थावबोधनार्थम् इमानि सूत्राणि प्रवृत्तानि।

सर्वेऽपि आस्तिकाः वेदप्रामाण्यमेव ज्येष्ठत्वेन स्वीकुर्वन्ति। न केऽपि आस्तिकाः वेदस्य वा वेदभागस्य वा वेदमन्त्रस्य अथवा एकस्य शब्दस्य अप्रामाण्यम् आमनन्ति। अतः सर्वस्यापि वेदस्य याथातथ्येन प्रामाण्यं तु प्रतिपादनियमेव। एवञ्च – **बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरेदिति**[२]।

बहुभिः मूढैः एतेषामुपनिषद्वाक्यानाम् अर्थः अन्यथा नीयते तथा सति अप्रासङ्गिकत्वेन तेषामुपनिषद्वाक्यानाम् आनर्थ्यक्यं प्रसज्येत्। तत्तु न कस्यापि इष्टम्। अतः समेषामपि उपनिषद्वाक्यानां सार्थक्यमेव न तु आनर्थ्यकम् इति मतं न्यायरीत्या द्रढयितुमेव इमानि सर्वाण्यपि सूत्राणि।

**❊ ब्रह्मसूत्रस्य प्रतिपाद्यविषयः –**

ग्रन्थेऽस्मिन् पञ्चपञ्चाशताधिकपञ्चशतसूत्राणि वर्तन्ते। इमानि सूत्राणि चतुर्षु अध्यायेषु विभक्तानि वर्तन्ते। ते च समन्वय–अविरोधाख्य–साधन–फलाध्यायाः चत्वारः। तत्रादौ किं सर्वाण्यपि उपनिषद्वाक्यानि ब्रह्मणि समन्वयं प्राप्नुवन्ति उत न इति जिज्ञास्यः विषयः, यथा **नदीनां सागरो गतिः** इतिवत् एतानि सर्वाण्यपि सूत्राणि सर्वप्रकारेण ब्रह्मण्येव समन्वयं प्राप्नुवन्ति इति मतसंस्थापनाय प्रथमोऽध्यायः समन्वयाध्यायः आरभ्यते।

एवञ्च भिन्नार्थकश्रुतीनां किं भिन्नार्थकत्वमेव वा इति जिज्ञास्य तेषां भिन्नार्थकत्वेऽपि तात्पर्यादिलिङ्गैः तात्पर्यं तु एकमेव इति अविरोधं प्रदर्शयितुम् अविरोधाख्यः द्वितीयाध्यायः आरभ्यते। परं ब्रह्मणः प्राप्त्यर्थं साधनभूततत्त्वानां विचारः तृतीयाध्याये क्रियते। अतः तृतीयाध्यायः साधनाध्यायः। चतुर्थाध्यायः फलाध्यायः।

अत्र केचन एवमाक्षिपन्ति यत् ग्रन्थेऽस्मिन् ब्रह्मज्ञानादेव मोक्षः इति तु न प्रतिपादितं तर्हि ब्रह्मजिज्ञासा किमर्थं कर्तव्या इति। एतत्तु असङ्गतमेव यतोऽहि उपक्रमोपसंहारसूत्राभ्यामेव एषा शङ्का निरस्यते। **अथातो ब्रह्मजिज्ञासा**[१] इति चादिमं सूत्रम्। साधनचतुष्टयसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा कर्तव्या इति च अस्यार्थः। साधनचतुष्टयसम्पत्यनन्तरं पुरुषेण ब्रह्मजिज्ञासा किमर्थं कर्तव्या इति च उपसंहारसूत्रेण ज्ञायते यद् – **अनावृत्तिः शब्दात्**[१] इति। अर्थात्

ब्रह्मजिज्ञासया दुःखरूपसंसारे पुनरावृत्तिः न भवति। **न स पुनरावर्तते**[२] इति श्रुतिरपि अमुमेवार्थं द्रढयति। अतः यत् प्रकृतं तस्मिन्नेव पर्यवसायः इति।

### ❋ अद्वैतवेदान्तस्य तात्त्विकः परिचयः -

### अद्वैतनये ब्रह्म -

अद्वैतवेदान्तदर्शनं श्रुतिसिद्धान्तमधिकृत्य प्रवर्तते इति जानीमः। श्रुतिसिद्धं – नित्यशुद्धबुद्धमुक्तस्वभावं निरञ्जनं, निष्कलं निष्क्रियं, शान्तं, निरवद्यं, निरस्तसमस्तोपाधिभेदं ब्रह्माद्वैतिनां सिद्धान्ते जिज्ञास्यं वर्तते। अतः सगुणं ब्रह्म, निर्गुणं ब्रह्म इति भेदेन निरूप्यमानं सदपि न सगुणतां ब्रह्मणः आपादयितुं प्रभवामः। न च निर्गुणं ब्रह्म सगुणं भवितुमेव नार्हतीति वक्तुं वा प्रभवामः। अतः भगवतः मायामयं रूपं भक्तानुग्रहाय सगुणमपि भवितुमर्हति। निर्गुणं तु सर्वोपाधिभेदविवर्जितमिति सर्ववेदान्तसिद्धान्त–स्वारस्यकथनेन ब्रह्मस्वरूपविवरणेन विरमामः।

### ❋ अद्वैतमते जीवः -

अद्वैतनये **जीवो ब्रह्मैव नापरः** इति जीवब्रह्मणोरभिन्नत्वं प्रसिद्धम्। ब्रह्मणः परमार्थसत्यत्वात् तदतिरिक्तस्य सत्यत्वमेव भवितुं नार्हति अतः तन्मात्रं सत्। जीवादयः तु न सच्छब्दवाच्याः भवन्ति। **अस्यात्मा जीवख्यः शरीरेन्द्रियपञ्चराध्यक्षः कर्मफलसम्बन्धी**[३] तदुक्तं भाष्यकारेण किन्तु जीवस्तु उपाधिपरिच्छिन्नः इति अङ्गीक्रियते।

अतः देहादिसङ्घातस्वामी जीवः इति उक्तं भवति। आविद्यकोपाधि–विशिष्टत्वमात्मनः जीवत्वापादकमिति अभिप्रायः। अद्वैतमते विभुपरिमाणं जीवस्येति सिद्धम।

### ❋ अद्वैतमते माया -

माया, अज्ञानम्, अविद्या, तमः इत्यादि शब्दाः समानार्थकाः वेदान्त पारिभाषिक व्यवहारे इति मन्महे। माया नाम सा या मा (न विद्यते)। वस्तुतः अविद्यमानायाः मायायाः विद्यमानत्वं सत्त्वं कुतो ग्राह्यम् इति आशङ्का भवत्येव, तत्र समाधिः – अहं कर्ता, अहं भोक्ता इत्यादि कर्तृत्वभोक्तृत्वग्राहकमिथ्याप्रत्ययोपलब्धेः व्यावहारिकस्य सदसद्भयाम-निर्वाच्यस्य मायिकत्वं मिथ्यात्वं वा वक्तव्यमिति हेतो माया अभ्युपगम्यते। सा च शक्ति द्वयवती। आवरणविक्षेपाख्ये द्वे शक्ती मायायाः स्तः। वस्तुतस्तु मिथ्याभूतत्वमेव मायिकत्वमिति निश्चयः। मायिकत्वमेव प्रपञ्चस्य मिथ्यात्वम् इति शम्।

### ❋ विशिष्टाद्वैतवेदान्तपरिचयः -

### ❋ पीठिका -

भारतीयदर्शनपरम्परायाः अभिन्नाङ्गत्वेनास्माभिः विशिष्टाद्वैतदर्शनमपि आद्रियते। अस्मिन् विशिष्टाद्वैतवेदान्ते रामानुजाचार्याणामनुयायिणः अन्तर्भवन्ति। ते सर्वेऽपि वेदानां प्रामाण्यम् अभ्युपगम्य वैदिकं सिद्धान्तमेव रामानुजीयमनुसरन्ति। भगवान् रामानुजाचार्यः भगवता नारायणेन समुपदिष्टं, श्रीदेव्या प्रवर्तितैः दशदिव्यसूरिभिः संरक्षितं, नाथमुनि, यामुनाचार्यादि प्रभृतिभिः प्रवर्धितं दार्शनिकं श्रीविशिष्टाद्वैतसाम्प्रदायपरिपोषकं सिद्धान्तं स्वीये श्रीभाष्ये व्याख्यातवान्। अस्य किञ्चित्सम्प्रदायस्य इतिहासं पश्यामश्चेत् – विशिष्टाद्वैतदर्शनस्येतिहासः। पाञ्चरात्रपाशुपताद्यागमनिष्ठा अस्मिन् साम्प्रदाये दृश्यते। पाञ्चरात्रपाशुपताद्यागम-निष्ठा अस्मिन् सम्प्रदाये दृश्यते। पाञ्चरात्रपाशुपताद्यागमानां महाभारतमिवैतेषामपि स्वीयं माहात्म्यम् आसीत्।

वेदानामिव स्वतः प्रमाणभूताः आगमाः आसन्। शैवशाक्तवैष्णवाद्यागमेषु सर्वेष्वपि समानताऽस्मिन् विषये वर्तते। उत्तरकाले प्रस्थानत्रयी तादृशं महत्त्वमासादितवति। प्रस्थानत्रयं वेदोपनिषदः, भगवद्गीता, ब्रह्मसूत्राणि च। शङ्करभगवत्पादैः एतत् प्रस्थानत्रयं व्याख्यातम् अतः एवं प्रसिद्धिः स्यादथवा पूर्विकाणामेवैवमभ्युपगमः।

स्यादेतत्। वैष्णवैरपि तत्प्रस्थानत्रयम् अङ्गीकार्यं स्वमतप्रतिष्ठापनाय इत्यापतितम्। वस्तुतः विशिष्टाद्वैतदर्शनस्य दार्शनिकीं दृष्टिं बौधायनवृत्तिः, द्रुमिलभाष्यम्, श्रीवत्साङ्कस्य विवरणम् इत्याद्याः ग्रन्थाः प्रयच्छन्ति। एतेषां ग्रन्थानामवलोकनेन प्रस्थानत्रयव्याख्यायां श्रीमद्विशिष्टाद्वैतसिद्धान्त-व्याख्यातृणां निश्चिता दृष्टिः बुध्यते। किन्त्वेतत् ग्रन्था अधुना नोपलभ्यन्ते। शाङ्करसिद्धान्ते प्रस्थानत्रयी आदृता अथापि श्रीभाष्यगतसिद्धान्ताः ततः महान्तं भेदमाप्नुवन्ति। अनेनैव श्रीभाष्यप्रकाशेन समग्रामपि जीवराशिमुद्दिधीर्षुः परमकारुणिकः आचार्यः भगवान् रामानुजः स्वीयप्रतिभाप्रकाशेन श्रीमद्विशिष्टाद्वैतसिद्धान्तान् स्वीये श्रीभाष्ये प्रकाशयामास। तेन श्रीभाष्यमिति अद्भुतशब्दरचनारचितग्रन्थप्रणयणेन भगवान् रामानुजः सरस्वत्याः स्वराभिषेकं विधास्यन् सर्वासां श्रुतीस्मृतिव्याख्यानविसङ्गतीनामसङ्गतात्मकताम-पनोदयामास। प्रसन्ना च सा विद्याधिष्ठात्री श्रीभाष्यं सम्मानयन्ती तत् शिरसि उद्दधार। तथाहि-

**तच्छ्रुत्वा शारदा हृष्टा श्रीभाष्यं तत्कृतं महत्।**
**शिरस्यारोप्य सम्भाव्य ततो बाहू प्रसार्य च।।**

**यतीन्द्रपाणि संगृह्य न प्रक्षिप्तमिदं निजम्।**
**इत्यङ्गीकृत्य वाग्देवी श्रुत्यर्थं तेन भाषितम्।।**

**तस्याकरोद्भाष्यकार इति नाम तदा मुदा।**
**हयग्रीवं कारयित्वा तस्मै दत्वा महौजसे।।**[१]

अतः रामानुजाचार्यप्रणीतस्य विशिष्टाद्वैतसिद्धान्तस्य नितरामनितर-साधारणं महत्त्वम् अस्ति इति ब्रूमः।

### ❊ विशिष्टाद्वैतम् इति शब्दार्थः -

रामानुजाचार्यसिद्धान्तदर्शनं विशिष्टाद्वैतदर्शनम् इति कथ्यते। वेदान्तवेद्यं परमात्मतत्त्वमेकमेव तच्च चेतनाचेतनात्मकेन जगता विशिष्टं वर्तते। परमात्मनि जगति च शरीरशरीरीभावः सम्बन्धः। यथा शरीरमात्मनः अपृथक् सिद्धं तथैव परमात्मानं विहाय क्षणमात्रमपि जगत् स्थातुं न प्रभवति। परमात्मनः पृथक्त्वे तन्नाश एव स्यात्। स जडचैतन्यविशिष्टः परमात्मा एक एव। तद्भिन्नं पदार्थान्तरं न विद्यते। अयमेव विशिष्टाद्वैत-शब्दगम्यः अर्थः। यथा शरीरमात्मनः भिन्नं सदप्यभिन्नमेव तथैव परमात्मभिन्नं सदपि परमात्मविशेषणतयाऽभिन्नमेव जगदिदम् इति सिद्धान्तः। विशिष्टाद्वैतम् इति शब्दस्य व्युत्पत्तिलभ्योऽर्थः इत्थम् - द्वयोर्भावो द्विता, द्वितैव द्वैतं भेद इत्यर्थः।

न द्वैतम् अद्वैतम् अभेदः इत्यर्थः।। विशिष्टस्य अद्वैतं विशिष्टाद्वैतम्। वैशिष्टयञ्च चिदचिदोः।

### ❊ विशिष्टाद्वैतदर्शनम् -

रामानुजदर्शने परमसत्तास्वरूपस्य त्रिधाभेदः दृश्यते। ब्रह्म इत्युक्ते ईश्वरः, चित् आत्मा, अचित् प्रकृतिः। परमार्थतः चिदचिदोः न ब्रह्मणो भेदः। अपृथक्त्वेऽपि वैशिष्ट्यं तत्र वर्तते। चिदचित् स्वरूपं ब्रह्मणः एव

विशिष्टं रूपं वर्तते। ब्रह्मणः उपरि एव चिदचिदात्मकं ब्रह्म आश्रितं वर्तते इत्ययमेव विशिष्टाद्वैतसिद्धान्तः।

यथा शरीरात्मनोः न पृथगस्तित्वं तथैव परमात्मनः व्यतिरिक्तं चिदचिदोः न किञ्चिदस्तित्वं वर्तते। ते चिदचिदे ब्रह्मणः शरीरभूते अथवा तयोः आत्मस्वरूपं ब्रह्म इति सिद्धान्तः।

**❊ विशिष्टाद्वैतवेदान्ताचार्य परम्परा -**

विशिष्टाद्वैतमिति शब्दार्थे समधिगते परम्परामस्य दर्शनस्य पश्यामः। चेतनाचेतनविभागविशिष्टं जगत् ब्रह्माभिन्नमिति प्रतिपादकस्य सिद्धान्तसुमस्य दरहासोल्हासदः इन्दुः यामुनाचार्यः। एतैः यामुनाचार्यैः प्रतिपादिताः सिद्धान्ता एव रामानुजाचार्यैः पुरस्कृताः। रामानुजाः द्रविडाचार्यभाष्यमनुव्याख्यान्ति अतः द्रविडाचार्यपरम्परायां विशिष्टाद्वैतससिद्धान्तमूलं प्रपश्यामः। शङ्करभगवत्पादैरपि माण्डुक्योपनिषद्भाष्ये द्राविडाचार्याणाम् आगमविद् इति उल्लेखः कृतः. बृहदारण्यके च सम्प्रदायविदित। एवमुल्लेखः सर्वैरपि वेदान्तव्याख्यातृभिः सादरमेव कृतः दृश्यते। यामुनाचार्यैरपि द्रविडाचार्याणां भाष्यं सदैवादृतमस्ति। वदन्ति च ते सिद्धित्रयम् इति ग्रन्थे - भगवता बादरायणेन इदमर्थमेव सूत्राणि प्रणीतानि विवृतानि च परिमितगम्भीर-भाष्यकृता। तथैव रामानुजाचार्याः अपि स्वभाष्योपजीव्यं ग्रन्थममुं निर्दिशन्तः पूर्वाचार्याः संचिक्षिपुः तन्मतानुसारेण इत्यादिकं पौनःपुन्येन भणन्ति च। पूर्वोत्तरमीमांसयोः एकशास्त्रत्वस्याभ्युपगमादपि रामानुजभाष्यं बोधायनटीकाम-नुसृत्य व्याख्यातं भवतीति स्पष्टं वर्तते। समग्रस्यापि पूर्वोत्तरमीमांसाशास्त्रस्य वृत्तिः बोधायनाचार्यैः कृतासीत्। इत्थं परम्परा विशिष्टाद्वैत-दर्शनस्यास्तीति अवगम्यते।

### ❋ रामानुजाचार्याः -

परमात्मा स्वयमेव **धर्मसंस्थापनार्थाय संभवामि युगे युगे**[१] इत्याह। तदनुसारेण सर्वदैव भूतलमाविर्भूय ब्रह्मविदात्मनावतीर्यावनीं भगवानेव रक्षति। तत्रासन्नवतार-पुरुषात्मनावतीर्णाः रामानुजाचार्याः।

दक्षिणभारतस्थे भूतपुरि (पेरम्बुधूरम्) इत्याख्ये ग्रामे तमिलनाडुप्रदेशे विक्रम संवत् १०७४ मध्ये सोमयाजिनः केशवाख्य ब्राह्मणस्य कान्तिमतीदेव्याः च सकाशात् रामानुजाचार्याः जनिमलभन्। ज्यौतिषानुसारेण तदा जन्मसमये सूर्यः कर्कस्थः आसीत्।तेषां पितरौ राजकुलसम्बन्धिनौ आस्ताम्। माता कान्तिमती पिता चासुरीकेशवः इत्येतौ तौ उपरि एव निर्दिष्टौ। रामानुजानां बाल्यं श्रीपेरुम्बुदुर मध्ये एव व्याप्तम्। षोडशे वर्षे वयसः रक्षकम्बल इति नाम्न्या सह रामानुजाचार्याः विवाहिताः।

पितुः मृत्योः पश्चात् रामानुजाचार्याः काञ्चीं गताः। तत्र यादवप्रकाशाख्यस्य गुरोः निकटे तेषां वेदाध्ययनमारब्धम्। यादवप्रकाशाचार्याणां वेदान्तव्याख्यानानि मायावादाच्छन्नानि आसन्। रामानुजाचार्यास्तु कुशाग्रमतयः सर्वं गुरोरप्यधिकं व्याख्यान्ति स्म। सः गुरुः सर्वामपि वेदान्तज्ञानशाखां फलात्मना रामानुजाय न्यवेदयत्। तदा रामानुजस्य वैदुष्यं गुरोरप्यधिकमभवत्। तेषां तर्काः अप्रतिसमाधेयाः आसन्। रामानुजानां कीर्तिध्वजः विनयस्तम्भे शोभायमानः आसीत्। शिष्याः अपि अधिकसङ्ख्याकाः अभूवन्। गुरुः यादवप्रकाशोऽपि तच्छिष्यतां स्वीचकार। रामानुजाचार्यप्रतिपादितः सिद्धान्तः विशिष्टाद्वैतम् इति नाम्ना विख्यातोऽभूत्। रामानुजपादाः महान्तः विद्वांसः, सदाचारसम्पन्नाः धैर्यवन्तः उदारचरिताश्चासन्। चारित्र्येण भक्त्या चैते अद्वितीयाः आसन्।

रामानुजाचार्याः काञ्चीपुरे वरदराजस्वामिमन्दिरे निवसन्ति स्म। वरदराजस्वामिसोवायां ते सुरताः आसन्। काञ्ची पुरस्य वायव्यदिशि ३०० किमी अन्तरे कावेरीतटनिकटवर्ति प्रदेशे पवित्रं नाम्नापि प्रसिद्धम् श्रीरङ्गं क्षेत्रम्। तत्र श्रीरंगं मठाधीशाः प्रसिद्धाः आलवार् सम्प्रदायगुरुवः यामुनाचार्याः निवसन्ति स्म। यामुनाचार्याः सन्निहितमन्तकमावेक्ष्य रामानुजाचार्यान् आह्वयामासुः। परन्तु एतेषां तत्र प्राप्तेः पूर्वमेव ते मृताः। अश्रुपरिपूर्णकमललोचनः श्रीमान्नामानुजाचार्यः यामुनाचार्याणां दक्षिणहस्तस्याङ्गुलित्रयमपिहितमवेक्षत्। तदैव सः अवगतवान् तत्रस्थं रहस्यम्। अब्रवीच्च चेत्थमुच्चरवेण - अहमज्ञानविमोहितान् जनान् नारायणपदपङ्कजामृतवर्षायां शरणागतिमाध्यमेन प्रापयित्वा निर्विशेषभावेन रक्षिष्यामीति। तदा तेषां यामुनाचार्याणाम् एका अङ्गुलिः उद्घाटिता। ततश्च तैः उक्तम् अहं लोकरक्षार्थं परममङ्गलतत्वज्ञानप्रदायकं श्रीभाष्यं रचयिष्यामीति। तदा द्वितीया अङ्गुलिः उद्घाटिता। ततः पुनस्तैः विष्णुपुराण रचयितुः पराशरमुनेः ऋणमपाकर्तुं तन्नाम मद्भक्ताय स्वशिष्यायप्रदास्यामीति। तदा तृतीयाप्यङ्गुलिः उद्घाटिता।

ततः रामानुजाचार्यैः ब्रह्मसूत्रम्, विष्णुसहस्रनामग्रन्थस्य अल्वार् प्रणीतस्य दिव्यप्रबन्धस्य च टीकां कृत्वा स्ववचनं परिपालितम्। ततश्च गृहस्थाश्रमं परित्यज्य श्रीरंगं स्थले तैः संन्यासदीक्षा पश्चात्तापापनोदनाय स्वीकृतता। ततश्च रामानुजाचार्याः गोष्ठीपूर्णगुरोः सकाशात् सन्न्यासदीक्षां प्राप्य ओं नमो नारायणाय इत्यष्टाक्षर-मन्त्रमप्यवाप्नुवन्। तं च मन्त्रं सर्वलोक कल्याणाय डिण्डिमपूर्वकं प्रकटीचक्रुः।

श्रीरामानुजाचार्याः वयसः १२० वर्षपर्यन्तं श्रीरङ्गे स्थिताः। वृद्धावस्थायां भगवतः श्रीरङ्गनाथस्य पुरतः स्वदेह परित्यागस्याज्ञां प्राप्य ते स्वशिष्याणां पुरस्तात् देहं दिनत्रयानन्तरं त्यक्तवन्तः। त्यक्त्वा चेमं लोकं वैकुण्ठं प्राप्तवन्तः आचार्याः इति श्रद्धावन्तो भावयन्ति। उपदेशश्चान्तिमः आसीत् तेषां -

१. सर्वदा भगवच्चरणारविन्दयोः समर्पितचेतसां सङ्गं कुर्वन्तु। स्वगुरुसेवा इव तेषां सेवां कुर्वन्तु।

२. सर्वदैव महावैष्णवानां वेदानां च वचनेषु श्रद्धा कार्या।

३. कामक्रोधलोभादिकं परिवर्ज्य इन्द्रियसंयमं कुर्वन्तु।

४. भगवतः श्रीनारायणस्य पूजां कृत्वा तन्नाममात्रम् आश्रयः इति मन्यन्ताम्।

५. भगवद्भक्तसेवया परमात्मसेवाफलमाशु सिद्धयति अतः भगवत्सेवां कुर्वन्तु इति।

**❊ रामानुजाचार्याणां ग्रन्थसम्पत् -**

१. वेदार्थसङ्ग्रहः
२. श्रीभाष्यम्
३. भगवद्गीताभाष्यम्
४. शरणागतिगद्यम्
५. विष्णुसहस्रनामभाष्यम्
६. वेदान्तदीपः
७. श्रीरंगगद्यम्
८. श्रीवैकुण्ठगद्यम्
९. वेदान्तसारः
१०. नित्याराधनम् इत्याद्या।

## ❊ श्रीभाष्यम् -

भगवद्रामानुजाचार्याणां सर्वोत्तमा लोकप्रसिद्धा चेयं कृतिः श्रीभाष्यम् इत्याख्या। एतद्ग्रन्थरचनायाः पूर्वम् आचार्याः शारदापीठस्य यात्रां कृतवन्तः। तस्यां यात्रायामेव तैः कश्मीरस्था बोधायनवृत्तिव्याख्या अभ्यस्ता। तदनुसारेणैव तैः श्रीभाष्यरचना कृता। तत्रस्थविद्वद्भिः कप्यासश्रुतेः व्याख्यां जिज्ञासामहे इत्युक्तं तदा तदर्थः रामानुजपादैः वर्णितः। तदित्थम् - प्रकृतश्रुतिः सूर्यमण्डलस्थस्य भगवतः नारायणस्य नेत्रयोः वर्णनं करोति। कं जलं पिबतीति कपिः, सूर्यः तेन आस्यते क्षिप्यते इति कप्यासः कमलमित्यर्थः इत्थं वर्णनं श्रुत्वा तत्पीठाधिष्ठात्री सरस्वत्यम्बा स्वयमाविर्भूयमङ्गलं समीहमाना इत्थमाह -

**श्रीभाष्यनामकमिदं भवदीयभाष्यम्।**
**श्रीभाष्यकार इति ते भुवने प्रथा स्यात्।।**

श्रीभाष्यमिति ग्रन्थः सर्वेषां वेदान्तवाक्यानां निर्णायकः। जीवनसमाप्तेः पूर्वं भगवान् रामानुजाचार्यः स्वशिष्येभ्यः उपदिदेश यत् -

**पठित्वा भाष्यन्तत् प्रवचनमशक्तौ शठरिपोः।**
**गिरिश्रद्धावासः प्रभुपरचितस्थाननिवहे।**
**प्रभोः कैङ्कर्यं वा प्रपदनमथोरर्थमननम्।**
**प्रपन्नानां वा मे भवतु परिचर्यापरिचयः।**
**कुटीङ्कृत्वा तस्मिन् यदुगिरितटे नित्यवसतिः।** इत्यादि।

अतः स्पष्टं यत् श्रीभाष्यस्याध्ययनं प्रवचनञ्च अत्युत्तमं कार्यं वैष्णवसम्प्रदाये इति।

### ❊ विशिष्टाद्वैतवेदान्तस्य तात्त्विकः परिचयः -

### ❊ विशिष्टाद्वैतनये ब्रह्मस्वरूपम् -

विशिष्टाद्वैतवेदान्ते चित् - अचित् - चिदचिदित्याख्यानि त्रीणि तत्त्वानि आदृतानि। चिद् - जीवः, अचित् - प्रकृतिः तथा चिदचिद्ब्रह्म इति प्रथा।

विशिष्टाद्वैते अशेषचिदचित्प्रकारमेकं तत्त्वमेव ब्रह्म। दर्शनसिद्धान्तनिर्णयस्तु विशिष्टाद्वैतिनां मते ब्रह्मविषये वर्तते यत् विष्णवाख्यः परवासुदेवः नारायण एवैकं चिदचिद्विशिष्टं ब्रह्म शब्दाभिधं तत्त्वमिति। कालभेदेन च ब्रह्मणः अवस्थाभेदः। प्रलयकाले सूक्ष्मचिदचिद्विशिष्टं, सृष्टिकाले च स्थूलचिदचिद्विशिष्टमिति। एते द्वे अवस्थे विशिष्टशब्देन निर्वहिते स्तः। प्रमाणञ्चेह -

**सूक्ष्मचिदचिदिति स्थूलचिदचिदिति विशेषणद्वयं परित्यज्य विशिष्टं च विशिष्टञ्च विशिष्टे इति द्वन्द्वसमासः। तयोः विशिष्टयोः अद्वैतं विशिष्टाद्वैतम्। द्वयोर्भावो द्वितैव द्वैतम्। न द्वैतमद्वैतम्। अद्वैतमभेदः विशिष्टयोः अद्वैतं विशिष्टाद्वैतम्।**[१]

इति अत्र सूक्ष्मस्य कारणत्वं स्थूलस्य च कार्यत्वम् इति विवेकः। तयोरैक्यं सूक्ष्मस्थूलयोः इत्यत्रैव शास्त्रस्य तात्पर्यम्। इदमेव चिदचिद्विशिष्टं ब्रह्मतत्वं श्रीमन्नारायण इति विशिष्टाद्वैतिनामाघोषः।[२]

स्यादेतत् नित्यशुद्धकूटस्थाविकारी स्वरूपम् ईश्वरं लिलक्षयिषु आचार्यः तल्लक्षणमाह -

सर्वेश्वरत्वं, सर्वशेषित्वं, सर्वकर्मसमाराध्यत्वम्, सर्वकर्मफलप्रदत्वम्[३] इत्यादि। ईश्वरलक्षणमधिगतमत्रस्थाः विशेषाः।

### ❋ ब्रह्मणः सर्वेश्वरत्वम् -

चराचरात्मकस्य प्रपञ्चस्य चिज्जीवस्य च नियामकं ब्रह्म। अतः नारायणशब्दाभिधः परमात्मैव सर्वेश्वरः इति कथ्यते। ईश्वरत्वञ्च - **कर्मादिकारका-न्तराप्रयोज्यत्वे सति समस्तेतरकारकचक्रप्रयोक्तृत्वम्।**[४] एतच्च सर्वान्तर्यामिणी नारायणे एव सम्भवति अतः सिद्धं तदीयमीश्वरत्वम्। ब्रह्मणः सर्वकर्मसमाराध्यत्वम्।

सर्वकर्मभिः समाराध्यो भगवानेव इत्यतः ब्रह्मैव सर्वकर्मसमाराध्यम्। **आराधनं नाम गौरवितप्रीतिजनिका क्रिया।**[५] इयं च प्रतीतिः, तदनुकूला क्रिया च भगवति एव सम्भवति।

### ❋ ब्रह्मणः त्रिविधकारणत्वम् -

ब्रह्मणि कारणता त्रिधा उपपन्ना - त्रिविधं कारणञ्च -

१. उपादानकारणम्, २. निमित्तकारणम्, ३. सहकारिकारणञ्च तत्र **कार्यरूपेण विकारयोग्यं वस्तु उपादानकारणम्। कार्यतया परिणमयितुं योग्यं निमित्तकारणम्। कार्योत्पत्त्युपकरणं वस्तु सहकारि।**[१] सूक्ष्मचिद-चिद्विशिष्टं ब्रह्मोपादानम्, बहुस्यां प्रजायेय[२] इति सङ्कल्पश्रवणात् निमित्तं, ज्ञानशक्त्यादिविशिष्टत्वात् सहकारि च।

### ❋ ब्रह्मण सर्वज्ञत्वम् -

सर्वज्ञं सर्वाधारञ्च ब्रह्म विशिष्टाद्वैतनये स्वीक्रियते। सर्वं जानाति इति सर्वज्ञः। यस्य सर्वविषयकं ज्ञानं भवति सैव सर्वज्ञशब्दवाच्यः भवति। एतादृशं सर्वज्ञत्वं ब्रह्मण्येव सम्भवति। श्रुतिश्चेह - यः सर्वज्ञः सर्ववित्।[३]

### ❊ ब्रह्मणः विभुत्वम् -

विभुत्वं नाम व्यापकत्वं वर्तते। एतत् व्यापकत्वं ब्रह्मणः एव सम्भवति। **अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्थितः**[४] इति श्रुतेः। तत् त्रिविधं व्यापकत्वम् - उक्तञ्च - **ब्रह्मणः व्यापकत्वं स्वरूपतो धर्मभूतज्ञानतो विग्रहतश्च त्रिविधं भवति।**[५]

### ❊ अनन्तं ब्रह्म -

**नान्तं गुणानामगुणस्य जग्मुः**[१] इति श्रुतेः परिच्छेदरहितस्यानन्त-कल्याणगुणस्य परमात्मनः श्रीमन्नारायणस्यानन्तवत्वमुक्तम्।

एवं प्रकारः ईश्वरः परव्यूहविभवान्तर्याम्यर्चावतारूपेण पञ्चधा विभक्तः।

### ❊ विशिष्टाद्वैतनये जीवस्वरूपम् -

चिद्, अचिद् चिदचिदित्याख्येषु प्रामुख्येन विशिष्टाद्वैत शब्दान्ते स्वीकृतेषु त्रिषु तत्त्वेषु चित् तत्त्वमेव जीवः। चिनुते धर्मार्थकाममोक्षान् इति चित्। चिनोति मुक्तिसाधनं भक्तिं प्रपत्तिं वा। एवञ्च चिच्छब्दवाच्यं तत्त्वं जीव इति सिद्धान्तेऽस्मिन् प्रमेयद्वैविध्यम् अभ्युपेयते। द्रव्यञ्चाद्रव्यञ्च। द्रव्यं जडाजडरूपेण भिद्यते। अजडञ्च पुनः प्रत्यक्पराग्रूपेण द्विविधम्। अजडस्य पुनर्जीवेश्वरभेदेन भेदः। अयं पराग्रूपत्वादेव भेदः। प्रत्यग्रूपसकाशादेव जीवस्य स्थितिः अतः जीवस्य अजडत्वं स्वीक्रियते। प्रत्यक्द्वैविध्यं जीवेश्वरभेदेन भवति। अतस्तयोर्जीवेश्वरयोः साधारणलक्षणानि सन्ति। तत्राचार्यः श्रीनिवासदासः आह -

अथ जीवो निरूप्यते - प्रत्यक्त्वचेतनत्वात्मत्वकर्तृत्वादीनि ईश्वरजीव-साधारणलक्षणानि। इमानि साधरणलक्षणानि प्रोक्तानि। अस्मिन्नेव प्रसङ्गे

जीवस्य ज्ञानाश्रयत्वं स्वयंप्रकाशत्वम्, आत्मत्वम्, ज्ञातृत्वम् कर्तृत्वादिकञ्च प्रतिपाद्यते। अणुपरिमाणश्च जीव इति सुविदितं प्रतिपन्नबुद्धीनाम्। नित्यत्वं प्रतिशरीरभिन्नत्वस्य सर्वदार्शनिकसिद्धान्तसम्मतप्रायम्। इत्थं जीवस्वरूपम्।

**❋ विशिष्टाद्वैतवेदान्ते जगत् -**

विशिष्टाद्वैते अचित् तत्त्वमेव जगदित्युच्यते। सिद्धान्ते अस्मिन् प्रमेयस्य द्रव्याद्रव्यरूपेण द्वैविध्यं स्वीक्रियते। तत्र द्रव्यं नाम उपादानमित्यर्थः। द्रव्याणि च प्रकृति - काल - शुद्धसत्वधर्मभूतज्ञान - जीव - ईश्वरभेदाच्च षड्विधानि भवन्ति। षण्णामेतेषां द्रव्याणां जडाजडभेदेन पुनर्विभागः। तद् जडत्वन्नाम - अमिश्रसत्त्व-रहितत्वमित्यर्थः। षट्सुद्रव्येषु प्रकृतिकालयोः द्रव्ययोः जडान्तर्भावः। जडरूपेण स्वीकृता प्रकृतिः चिदचित्स्वरूपस्य परमात्मनः अचित्स्वरूपमेव। तल्लक्षणञ्च सत्त्वरजस्तमोरूप गुणत्रयाश्रया प्रकृतिः। इति। इयमेवाक्षराऽविद्या माया इत्यादिशब्दवाच्या। परमात्मनः स्वरूपाभिन्नत्वादेव नित्या। अथाप्यस्वतन्त्रा ईश्वराधीना च। एतदेवाचित् तत्त्वं त्रिधा विभज्यते - शुद्धसत्त्वं, मिश्रसत्त्वं, सत्त्वशून्यम् इति।

**❋ शुद्धसत्त्वम् -**

केवलसत्वगुणात्मकं सत्त्वं शुद्धसत्त्वमित्युच्यते। शुद्धसत्त्वं ज्ञानमिवाजडं किन्तु ज्ञानशून्यमान्तरिकानन्दजनकं भवति।

**❋ मिश्रसत्त्वम् -**

मिश्रसत्त्वं मूलप्रकृतिः। गुणत्रयं तस्यां प्रकृतौ सम्मिश्रं भवति। अत्यद्भुतः परमविचित्रः प्रपञ्चः शुद्धसत्त्वादेव जायते। इयमेव ईश्वरस्य सृष्ट्युत्पत्तिसहायभूता प्रकृतिः।

**❋ सत्त्वशून्यम् -**

सत्त्वरजस्तमोगुणानां शून्यत्वे सत्येव सत्त्वशून्यं कालः इत्युच्यते। इदं नित्यं विभुश्च वर्तते। ईश्वरस्य सृष्टिव्यापारोऽपि कालाधीनः। इदञ्चैकं जडद्रव्यम् इति।

**❋ प्रपञ्चसत्यत्वम् -**

प्रपञ्चस्य मिथ्यात्वं शङ्करभगवत्पादाः उपस्थापयन्ति। ब्रह्ममात्रमेकमे-वाद्वितीयं सदितरत् च परिदृश्यमानं जगन्मायाविकार एव अतस्तन्मायिकं मायामयत्वात् मिथ्यैवेति सिद्धान्तयन्ति। बाधितत्त्वादपि प्रपञ्चमिथ्यात्वमिति साधयन्ति उक्तञ्च - ब्रह्मसाक्षात्कारानन्तरं हि घटादिप्रपञ्चस्य बाध एव भवति। बाधितत्वात् मिथ्येति व्यवस्था।

एतत् प्रपञ्चमिथ्यात्वं न रामानुजीयमते तन्मते वा प्रमाणभूतं वर्तते। पूर्वपक्षात्मना मतमिदमादृत्य खण्डयन्तः भगवद्रामानुजश्रीचरणाः मायां ब्रह्मणः अनन्तकल्याण-गुणैकसिन्धोर्नारायणस्य शक्तित्वेन व्याख्यान्ति। प्रमाणयन्ति च श्रुतिं **मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्**[१] इति अतः इयं माया एव प्रकृतिः इत्युच्यते। इतः प्रागेव च त्रिगुणात्मिकाऽस्वतन्त्रा त्रिविधा प्रकृतिर्व्याख्याता सद्रूपा च सा इति निश्चप्रचम्। इति शम्।

**❋ शुद्धाद्वैतवेदान्तपरिचयः -**

वेदान्तशास्त्रस्य नैकाः शाखाः समग्रेऽपि तत्त्वज्ञानप्रपञ्चे सन्ति। तत्र शुद्धाद्वैतवेदान्तः इति नामपुरस्कारेण स्वमतं वल्लभाचार्यैः समुपस्थापितम्। अस्मिन् मते के के विशिष्टाः सिद्धान्ताः सन्तीत्येतत् संक्षेपेण परिचाययिष्यामः।

मनुजचिन्तनप्रवाहस्य सागरोपमं चरमं गम्भीरञ्च आध्यात्मिकं वेदान्त-दर्शनमित्यस्मिन् विषये न विचिकित्सा विपश्चिदपश्चिमानाम्।

समग्रं वेदान्तदर्शनं प्रस्थानत्रयमाश्रित्य विचार्यते प्रस्थानत्रये प्रथमं श्रुतिप्रधानमुपनिषत् प्रस्थानम्। ततः स्मृति प्रधानं भगवद्गीता प्रस्थानं, तृतीयं न्यायप्रस्थानम् अस्ति ब्रह्मसूत्रेष्वाश्रितम्। एतत् प्रस्थानत्रयं समानं विषयं विभिन्नां शैलीमादृत्य गमयति। उपनिषदां दार्शनिकीशैली, गीतायाः सुबोधिनी नैतिकीशैली, ब्रह्मसूत्राणां तर्काधारिता शैली वर्तते। एतत्प्रस्थानत्रयविषये अधिकारिभेदग्राहकं स्वीयमभिप्रायमहं प्रस्थान-त्रयपरिचयसमये एव दत्तवानस्मि अतस्तत् न पुनरत्र विचारयामि। प्रकृतमनुसरामः। जीवब्रह्मणोः स्मबन्धविवेचनाय नैके सिद्धान्ताः वेदान्तदर्शनाधिकृताः प्रतिपादिताः वर्तन्ते। तदाधारेणैव नैके सम्प्रदायाः प्रवृत्ताः। तत्र वैष्णवपरम्परायां चत्वारः सम्प्रदायाः वर्तन्ते। श्रीसम्प्रदायः, सनकसम्प्रदायः, ब्रह्मसम्प्रदायः, रुद्रसम्प्रदायश्च। श्रीसम्प्रदायप्रवर्तकाः रामानुजाचार्याः, सनकसम्प्रदायप्रवर्तकाः निम्बार्काचार्याः, ब्रह्मसम्प्रदाय प्रवर्तकाः मध्वाचार्याः, रुद्रसम्प्रदायप्रवर्तकाः विष्णुस्वामिपादाः। एतत् सम्प्रदायचतुष्टयमपि वैष्णवसम्प्रदायचतुष्टयं वर्तते। एतन्मतचतुष्टयवशात्प्राप्तं सम्प्रदायचतुष्टयमपि प्रमाणत्वेन श्रद्धावद्भिः गृह्यते। तद्वयं प्रकृतविचारविषयत्वेन शुद्धाद्वैतदर्शनम् अनुसरामः।

**❊ शुद्धाद्वैतम् इति शब्दार्थः -**

शुद्धाद्वैतम् इति शब्दः सामासिकः। एतत् शब्दार्थनिरूपणं शुद्धाद्वैतमार्तण्डे कृतमस्ति। शुद्धाद्वैतपदे शुद्धञ्च तदद्वैतञ्च शुद्धाद्वैतम् इति कर्मधारयः ज्ञेयः। अथवा शुद्धयोरद्वैतं शुद्धाद्वैतम् इति षष्ठी तत्पुरुषः ग्राह्यः। तदुक्तम् -

**शुद्धाद्वैतपदे ज्ञेयः समासः कर्मधारयः।**
**अद्वैतं शुद्धयोः प्राहुः षष्ठीतत्पुरुषं बुधाः।।**[१]

शुद्धाद्वैते माया ब्रह्मणः शक्तिः इति स्वीक्रियते। **मम माया दुरत्यया**[१] इति स्मृतेः। अतः अहन्ता ममता इत्यादिरूपः अध्यास एव मायिकः, न जीवः। अद्वैतवेदान्तविदः जीवस्य मायिकत्वं व्याख्यान्ति तन्नास्मन्मते सिद्ध्यतीति सिद्धान्तः। एतत्परिपोषणाय प्रोक्तम् -

**माया सम्बन्धरहितं शुद्धमित्युच्यते बुधैः।**
**कार्यकारणरूपं हि शुद्धं ब्रह्म न मायिकम्।।**[२]

अतः शुद्धं ब्रह्म ग्राह्यम् इति हेतोः अद्वैतशब्दात् पूर्वं शुद्धशब्दः प्रयुक्तः। शुद्धं मायासम्बन्धशून्यमित्यर्थः। अथवा शुद्धयोः मायासम्बन्धशून्ययोः जगत्ब्रह्मणोः अद्वैतम् इत्यर्थो ग्राह्यः। तदिदं शुद्धाद्वैतं विस्तरेण प्रकाश्यते।

शुद्धाद्वैतसम्प्रदायप्रवर्तकाः श्रीवल्लभाचार्याः नैकान् भाष्यग्रन्थान् रचयामासुः। तेषां ब्रह्मसूत्रभाष्यम् अणुभाष्यम् इति नाम्ना प्रसिद्धं वर्तते। वेदान्तवाक्यानां सूत्रात्मकग्रन्थानुरोधेन विचारः क्रियते इति ब्रह्मसूत्रशाङ्करभाष्यकृतः अभिप्रायः तदेवानुसरन्तः वल्लभाचार्यचरणाः अपि -

**ये धातु शब्दा यत्रार्थे उपदेशे प्रकीर्तिताः।**
**तथैवार्थो वेदराशेः कर्तव्यः नान्यथा क्वचित्।।**[३]

अस्यार्थः -

येषां धातूनां क्रियापदानां संज्ञावाचकानां पदानां च यः अर्थः निरुक्तव्याकरणादि शास्त्रद्वारा कृतः स एव अर्थः शास्त्राणां व्याख्यानेष्वपि ग्राह्यः। अन्यार्थकत्वेन विपरिणामः अनर्थकः इति तेषामभिप्रायः। शुद्धाद्वैतस्य सैद्धान्तिकविषयाणामालोचनात्पूर्वं किञ्चित् परम्परापरिचयं प्राप्नुमः।

**❋ शुद्धाद्वैताचार्यपरम्परा -**

पूर्वोक्तसम्प्रदायचतुष्टये रुद्रसम्प्रदायप्रवर्तकाः विष्णुस्वामिनः भगवतः अनन्यभक्ताः आसन्। बाल्यादेवाध्यात्मशक्तिसम्पन्नाः आसन् आचार्यचरणाः। भगवतः स्वरूपसाक्षात्काराय इमे अन्नपानादिकं त्यक्तवन्तः। अनन्यप्रेमभक्तेरस्याः फलमेवमासीत् भगवद्दर्शनं तदनुग्रहश्च। भगवतः मुखारविन्दादेव एभिः साधनोपदेशः प्राप्तः। तदुपदेशानुसारेण इमे बालगोपालमुकुन्दस्य उपासनायां निरताः अभूवन्। विष्णुस्वामिनः अवस्थानं कस्मिन् काले असीद् इत्यस्मिन् विषये विद्वांसः विप्रतिपन्ना एव। अथापि श्रीधरस्वामिभिः भागवतग्रन्थटीकाकर्तृषु सुप्रसिद्धैः स्वीयायां भावार्थटीकायां विष्णुस्वामी विरचितस्य सर्वज्ञसूक्तस्य पौनःपुन्येन उल्लेखः कृतः दृश्यते। श्रीधरस्वामिणः चतुर्दशे शतके आसन् अतः त्रयोदशशतके विष्णुस्वामिणः आसन्निति कल्प्यते।[१]

वल्लभसम्प्रदायानुसारेण वल्लभानुयायिणां मते वल्लभाचार्याः विष्णुस्वामिणः परम्परायामेव उत्पन्नाः आसन्। तैः तदीयसिद्धान्त एव नवीनं वस्त्रं धारयित्वा नूतनतया व्यवस्थापितः। स एव सिद्धान्तः परमार्थतः शुद्धाद्वैतं, व्यवहारतः पुष्टिमार्गः इति प्रसिद्धिमगात्।

**❋ वल्लभाचार्याः -**

वल्लभाचार्यपूर्वपुरुषः यज्ञनारायभट्टः आसीत्। श्रीमतां वल्लभवंशीयाणां कुलमिदम् आत्रेय, आर्चनस, शावक्य त्रिप्रवरान्वितं कृष्णयजुर्वेदान्तर्गत तैत्तिरीयापस्तम्बशाखाध्यायी ब्राह्मणकुलम् आसीत्। तेषां वंशवृक्षे आद्यपुरुषात्मना श्रीमतः यज्ञनारायणभट्टस्य उल्लेखः उपलभ्यते।[१]

एते मूलपुरुषाः दक्षिणस्थे कांकरवाड् ग्रामे वसन्ति स्म। एते श्रोत्रियाः, कर्मनिष्ठाः, समृद्धाः, स्वाध्यायशीलाश्च पण्डितप्रवराः भक्ताः भगवदुपासकाश्च आसन्।[२]

यज्ञनारायणभट्टः द्वात्रिंशत् सोमयागानामनुष्ठानोत्तरं मदीय पुत्रात्मना त्वमवतर इति प्रार्थनां कृतवान्। तदा भगवान् शतानां सोमयागानां समाप्तेः परमहमवातरिष्यामि इति वरमयच्छत्। वल्लभाचार्याणां पितृपादैः अन्तिमाः पञ्चयज्ञाः पूर्णतां नीताः। तदा तेषां गृहे वल्लभावतारात्मना वैश्वानर एवावततार। एतेषां जन्मतिथिविषयेऽपि विद्वत्सु विप्रतिपत्तिः वर्तते। अथाऽपि साम्प्रदायगणनानुसारेण तेषां जन्म विक्रम सम्वत् १५३५ मध्ये वैशाखकृष्णैकादश्यां गुरुवासरे अभूदिति स्वीक्रियते। एतेषामध्ययनं संस्कृतगिरायामेव अभूत्। बाल्ये एवैतेषां प्रतिभासाक्षात्कारः सर्वैः विद्वद्भिः दृष्टः अतः लाल - सरस्वती - वाक्पत्ति इत्युपाधिरेव तदीयमलङ्कार भाजनम् अभूत्। तैः कौमार्यावस्थायां सर्वेषु पौराणिकेषु दार्शनिक ग्रन्थेषु च व्युत्पत्तिं सम्पाद्य पूर्णरूपेण विद्वत्त्वमासादितम्।

शुद्धाद्वैतसम्प्रदायप्रचाराय तैः १५४६ संवत् मध्ये उत्तर भारतयात्रा कृता। वल्लभाचार्याः प्रमुखेषु तीर्थेषु धार्मिकेषु स्थानेषु च शुद्धाद्वैतस्य पुष्टिमार्गस्य च प्रचारं कुर्वाणाः १५४६ संवत् मध्ये उज्जयिनीं प्राप्ताः। ततश्च दक्षिणां दिशं गच्छन्तः ते संवत् १५४८ मध्ये विजयनगरं प्राप्ताः। मातरं च अस्वास्थकारणात् तत्रैव मातुलगृहे स्थापितवन्तः। अस्यां यात्रायामेव विजयनगरस्य राज्ञः सभायां कनकाभिषेकः आचार्यचरणानामभूत्।[१]

संवत् १५५० मध्ये ऐदं प्राथम्येन इमे वृन्दावनं जग्मुः। तत्रैव तैः श्रीमद्भागवतपारायणमकारि। द्वितीया यात्रा १५५४ मध्ये आरब्धा संवत्

१५५९ मध्ये समाप्ता। तदा ते १९ वर्षीयाः आसन्। अस्यां यात्रायामेव ते विवाहविषये प्रेरणां प्राप्तवन्तः। ततश्च तैः सम्वत् १५५८ मध्ये आषाढमासे मधुमङ्गलनाम्नः ब्राह्मणस्य महालक्ष्मी इत्याख्यया कन्यया सह विवाहः कृतः। तृतीया यात्रा चैतेषां सम्वत् १५६१ मध्ये आरब्धा १५६६ मध्ये समाप्ता। वल्लभ सम्प्रदाये इमाः यात्राः पृथ्वीपरिक्रमाः अथवा दिग्विजय यात्राः इति नाम्ना प्रथिताः आसन्। एतासु यात्रासु चतुरशीति स्थानेषु वल्लभाचार्याः भागवतपारायणं कृतवन्तः। तानि स्थानानि अधुनापि प्रसिद्धिमावहन्ति।

**❊ वल्लभाचार्यकृतयः -**

वल्लभाचार्याणां व्यक्तिमत्त्वमतीव प्रभावकरमासीत्। ते अत्यन्तं मेधाविनः, विद्वांसः पवित्राश्चासन्नाचार्यचरणाः। संस्कृतभाषायां विद्यमानासु तेषां रचनासु तत्पाण्डित्यपरिचयः सर्वेषां दृष्टिपथमायास्यति एव तद्ग्रन्थावलोकनेनेति मन्महे। वल्लभसंप्रदाये तेषां चतुरशीति ग्रन्थाः सन्ति। अधुना तु त्रिंशदुपलभ्यन्ते।[१]

ग्रन्थाः यथा -

१. ब्रह्मसूत्राणुभाष्यम्, २. तत्त्वार्थदीपनिबन्धः, ३. सुबोधिनी - श्रीमद्भागवतावतारीका, ४. पूर्वमीमांसाभाष्यं - जैमिनीसूत्रभाष्यं, ५. षोडशग्रन्थाः - षोडशग्रन्थसङ्ग्रहः, ६. पत्रावलम्बनम्, ७. शिक्षाश्लोकाः, ८. मधुराष्टकम्, ९. पुरुषोत्तमसहस्रनाम, १०. सेवाफलविवरणम्, ११. भगवत्पीठिका, १२. गायत्रीभाष्यम्, १३. न्यासादेशः, १४. त्रिविधनामावली, १५. प्रेमामृतम्। इत्यादयः।[१]

## ❋ शुद्धाद्वैतवेदान्तस्य तत्त्विकः परिचयः -

ब्रह्म ब्रह्मलक्षणञ्च –

लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिः। अतः लक्षणकथनेनैव वस्तुस्वरूपावधारणं सम्भवतीति तदादौ वक्तव्यम्। लक्षणं तु असाधारणधर्मवचनम्।[२] एतल्लक्षणं वेदान्तदर्शने द्विधा अङ्गीकृतम्। स्वरूपलक्षणं तटस्थलक्षणञ्चेति। स्वरूपं तावदुक्तं – स्वसम्पत्तिसमर्पकत्वे सति इतरव्यावर्तकत्वं स्वरूपम्।[३]

तटस्थलक्षणमपि –

यावल्लक्ष्यकालम् अनवस्थितत्वेन स्वरूपान्तर्गतं सत् यत् लक्ष्यम् इतरव्यावृत्तं बोधयति तत् तटस्थलक्षणम्।[४] तदुभयं लक्षणं ब्रह्मणः भवतीति दार्शनिकानामभिप्रायः। ब्रह्मणः स्वरूपलक्षणं **सत्यं ज्ञानमन्तं ब्रह्म**[१] इति श्रुति प्रतिपादितत्त्वात् सत्यज्ञानानन्तरूपम्। जगत्कर्ता, जगत्पालकः, सर्वज्ञ– , अन्तर्यामी इत्याद्याः शब्दाः जगत्सम्बन्धमनुवदन्ति अतः जन्माद्यस्य यतः[२] इति सूत्रेणोपस्थापितं जगज्जन्मस्थितिलयहेतुत्वं ब्रह्मणः तटस्थ लक्षणं भवति।

## ❋ ब्रह्मस्वरूपम् -

शङ्करानुयायिनः निर्धर्मकं ब्रह्म इत्याग्रहं कुर्वन्ति। रामानुजीयाश्च सधर्मकम् इति प्रसिद्धैव रूढिः। श्रीवल्लभाचार्याः विष्णुस्वामिभिः प्रतिपादितं शुद्धाद्वैतं निरूपयन्तः ब्रह्मणः सर्वधर्म साहित्यं राहित्यञ्चोभयमपि अनुसरन्तः उभयमपि ब्रह्मरूपं सदिति जगदुः। सत्यमप्येतत् कथं ब्रह्मणः इदमेव स्वरूपमिति सामान्येन निर्णयः कर्तुं शक्यः। ऐश्वर्यादि षड्गुणोपेतमपि

तद्ब्रह्म सजातीयविजातीयस्वगतभेदविवर्जितम् इति वाल्लभाः। भेदः द्वैतम्। तद्रहितम् इत्यर्थः। तदुक्तम् -

**सजातीयविजातीयस्वगतद्वैतवर्जितम्।**
**सत्यादिगुणसाहस्रैर्युक्तमौत्पत्तिकैः सदा।।**[३]

अनन्तात्मकं तद् ब्रह्मानन्तं कूटस्थं, चलं सर्वविरुद्धधर्माश्रयम् अतः तर्कयुक्त्याद्यगम्यं तथा चोक्तम् - अनन्तमूर्ति तद्ब्रह्म ह्यविभक्तं विभक्तिमत्[४] ब्रह्म एकं व्यापकम्। अतः एकमनेकमपि। वाल्लभमतेऽपि ब्रह्म जगदभिन्ननिमित्तोपादानम्। ब्रह्म निर्गुणमनन्तगुणमपि भक्तभावनानुरूपः भगवान्। अतः विविधाकारं ब्रह्म तदुक्तम् -

ब्रह्म तूभयरूपम्, उभय व्यपदेशात्, उभयरूपेण निर्गुणत्वेन अनन्तगुणत्वेन सर्वविरुद्धधर्मेण रूपेण व्यपदेशात्। तत्राह अहिकुण्डलवत्, यथा सर्प - ऋजुरनेकाकारः कुण्डलञ्च भवति तथा ब्रह्मस्वरूपं सर्वप्रकारं भक्तेच्छया तथा स्फुरति।[१] ब्रह्म सत्यं ततः उत्पन्नाः जीवाः प्रपञ्चश्च सर्वमप्येतत् सत्यम्। अतः ब्रह्म निमित्तमुपादानञ्च। समवायित्वञ्च प्रोक्तम् - **जगतः समवायि स्यात् तदैव च निमित्तकम्।**[२] ब्रह्म अनन्तात्मना स्थितं सदपि विभक्तं, विभक्ततायां सत्यामपि अविभक्तम्। तस्यानन्त मूर्तिषु अपि न कश्चित् भेदः। इतश्च तावत्सु एव अंशेषु ब्रह्म आत्मानं प्रकटयति यावत्सु पूर्वसङ्कल्पः वर्तते। उक्तञ्च -

**बहुस्यां प्रजायेयेति वीक्षा तस्य ह्यभूत् सती।**
**तदिच्छामात्रतस्तस्मात् ब्रह्मभूतांशचेतनाः।।**[३]

अनेन विरुद्धधर्माणाम् एकस्मिन् ब्रह्मणि सत्त्वं भूषणावहम् एव न तु दूषणावहम् इति प्रतिपादितं भवति। अतस्तदेव सर्वकर्तृ इत्यपि युक्तम्।

सर्वकर्तृकत्वेऽपि ब्रह्मणः एव सिद्धे तस्य वैषम्यनैर्घृण्य दोषः स्यादिति चेत् न **तदनन्यत्वमारम्भणशब्दादिभ्यः**[4] इत्यादि सूत्रप्रामाण्यात् जगद्ब्रह्मणोः अभेदः। अभिन्नस्य ब्रह्मणः एव स ह एतावानास, तदात्मानं स्वयमकुरुत, आत्मैवेदं सर्वम् इत्यादिश्रुतीनां **जन्माद्यस्य यतः शास्त्रयोनित्वात्**[5] इत्यादिसूत्राणाम् **अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा**[6] इत्यादि कामधेनुकल्पवृक्षचिन्तामण्यादयः यथा वरयितुः कामनानुसारं स्वयमेव अविकृताः सन्तः समुपस्थिताः भवन्ति तद्वत् ब्रह्मापि सर्वान् पदार्थान् निर्माय स्वयं रमते। न चैवं सति भोक्तृभोग्ययोः संकरः इत्यपि मन्तव्यम्। कटककुण्डलवदेतत् उपपद्यत एव। कुण्डलं कटकमपि सुवर्णविकार एव। तत् न भ्रान्तेनापि परस्परम् एकम् इति गृह्यते। अतः ब्रह्मत्वसाम्येऽपि न भोक्तुः भोग्यत्वं न च भोग्यस्य भोक्तृत्वं स्यात्। अत्र केचित् कटककुण्डलादिकं केवलेन स्वर्णेन न निर्मातुं शक्यं तथा मायामयत्वादि आदि उपाधिमालिन्यं ग्राह्यमेव।

### ❊ अक्षरं ब्रह्म -

ब्रह्मण अधिदैविकं रूपमेव अक्षरं ब्रह्म इत्युच्यते। अक्षरं ब्रह्म पुरुषोत्तमस्य आधारभूतं ब्रह्म। ब्रह्म पुच्छं प्रतिष्ठा इत्याद्यानन्दमय-निरूपणप्रस्तावश्रुतेः। अक्षरब्रह्मस्वरूपेणैव सेव्यः अनेक भावापन्नः पुरुषः ज्ञानमार्गे तत एव मोक्षः इति सिद्धान्तः।

### ❊ जीवस्वरूपम् -

भगवान् रमणेच्छया आनन्दांशं तिरोहितं कृत्वा सच्चिदंशाभ्यामावहति स एव जीवः। विरुद्धधर्माश्रयत्वादेवानेकरूपग्रहणसामर्थ्यं ब्रह्मणः। तस्मिन् जीवरूपे अविद्यासम्बन्धः नास्त्येव। जीवः प्राकृतैरिन्द्रियैरग्राह्यः। किन्तु

योगेन, भगवद्दर्शनसम्पादयित्र्या दृष्ट्या, ज्ञानदृष्ट्या च ग्रहीतुं शक्यः। स च नित्यः। जननमरणादिकं जीवस्य लाक्षणिकम्। ज्ञोऽत एव[१] इति सूत्रप्रामाण्यात् जीवः ज्ञाता। ज्ञानादतिरिक्तः इति सिद्धम्। जीवस्य परिमाणचिन्तायाम् इदमुच्यते – तत्त्वमसि श्वेतकेतो एषोऽणुरात्मा चेतसा वेदितव्यः[२] इत्यादि श्रुतेः जीवः न विभुपरिमाणः अपि तु अणुपरिमाण एव –

वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः इत्यादि श्रुतेः तदणुत्वं स्पष्टतरम्। स एव आनन्दांशे साक्षात् कृते आनन्त्याय कल्प्यते इत्येतदन्यत्।

जीवः ईश्वरांशोऽपि – ममैवांशो जीवलोके जीवभूतः सनातनः[१] इति भगवदुक्तेः अंशो नाना व्यपदेशात्[२] इति सूत्रप्रामाण्याच्च जीवो ब्रह्मणः अंशः कल्प्यते। अस्मिन् सांशत्वनिरंशत्वसिद्धान्ते श्रुतयः एव प्रमाणम्। न युक्तिगम्योऽयं विषयः।

जीवस्यावस्थात्रयम् अस्मिन् सिद्धान्ते अभ्युपगम्यते – शुद्धः जीवः, संसारि जीवः, मुक्तश्च। अविद्यासम्बन्धराहित्यमेव शुद्धत्वम्। पराभिध्यानात्तु तिरोहितं ततोह्यस्य बन्धविपर्ययौ[३]। इति तत्त्वसूत्रात्। भगवत्सङ्कल्पादेव केषुचित् जीवेषु मुक्तियोग्यता सिद्धयति[४] इति स्मृतेः। तदा ते मुक्तियोग्याः जीवाः पञ्चपर्वां विद्यांलब्ध्वा मुक्ताः भवन्ति। तत्र द्विविधाः ते मुक्ताः, जीवन्मुक्ताश्च। पुनर्जीवाः द्विविधाः दैवाः असुराश्च। दैवाः पुनः मर्यादामार्गोपासकाः पुष्टिमार्गोपासकाश्च इति भिद्यन्ते।

शुद्धाद्वैतमते ब्रह्मजीवजगतां परिचयः प्राप्तः। इतः शुद्धाद्वैतवेदान्तप्रसिद्धाः सिद्धान्ताः संक्षेपतः परिचाययिष्यन्ते। ते च यथा

– १. ब्रह्मवादः, २. विरुद्धधर्माश्रयतावादः, ३. सत्कारणवादः, ४. सत्कार्यवादः, ५. अविर्भावतिरोभाववादः, ६. अविकृतपरिणामवादः, ७. कार्यकारणतादात्म्यवादः।

**❊ ब्रह्मवादः -**

ब्रह्मवादस्य तात्पर्यं जगदुत्पत्तिस्थितिलयहेतुः न ब्रह्मभिन्नमित्यभ्युपगमः। सारल्येन वक्तव्यं चेत् ब्रह्मजगदभिन्ननिमित्तोपादानम् इति वक्तव्यम्। जगत्सापेक्षम् उपादानं समवायिकारणञ्च ब्रह्म एव। अन्येषाम् ईश्वरकारणिनां मते निमित्तमेव ब्रह्म नोपादानम्। ब्रह्मणः उपादानत्वं तु वेदान्तिभिरपि कैश्चिदङ्गीक्रियते अथापि तत् तत्त्वान्तरापेक्षमेव ब्रह्मजगदुपादानं भवितुमर्हतीति वादिनस्ते ब्रह्मणः विवर्तोपादानत्वं, प्रकारोपादानत्वम्, धर्मोपादानत्वम् इत्यादिकं कल्पनाजन्यं परिकल्पयामासुः। किन्तु वल्लभाचार्यमते ब्रह्मस्वयं स्वरूपतः जगदाकारेण परिणतम् इति। ते व्याख्यान्ति –

तद् ब्रह्मैव समवायिकारणं ...... समन्वयात्, सम्यगनुवृत्तात्वात्, अस्तिभातिप्रियत्वेन सच्चिदानन्दरूपेणान्वयात्.... स आत्मानं स्वयमकुरुत इति निमित्तत्वं तु स्पष्टमेव सर्ववादिसम्मतम्[1] अतः स्वेतरत् वस्त्वन्तरमनपेक्ष्यैव ब्रह्म जडजीवात्मकस्य जगतः अभिन्ननिमित्तोपादानं मन्तव्यम्। अयमेव ब्रह्मवादः आचार्य चरणैः स्पष्टं व्याख्यातः – तद्यथा –

**आत्मैव तदिदं सर्वं सृज्यते प्रभुः।**
**त्रायते त्राति विश्वात्मा ह्रिते हरतीश्वरः।।**

**आत्मैव तदिदं सर्वं ब्रह्मैव तदिदं तथा।**
**इति श्रुत्यर्थमादाय साध्यं सर्वैर्यथामति।**
**अयमेव ब्रह्मवादशिष्टं मोहाय कल्पितम्।।**[२]

ब्रह्मवादोऽयम् अधोनिर्दिष्टाभिः श्रुतिभिः परिपोष्यते।

१. यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति।[३]

**ब्रह्ममात्रमिदं सर्वं ब्रह्मणोऽन्यन्न किंचन**[१]

**ब्रह्म ह वा इदमग्र आसीत्**[२]

**द्यावापृथिवी जनयन्देव एकः**[३]

**सर्वं खल्विदं ब्रह्म**[४]

**एकमेवाद्वितीयं तदैक्षत बहुस्यां प्रजायेय**[५]

अर्थः एतासां श्रुतीनां - सृष्टेः आदावन्ते मध्ये च सर्वत्रैव ब्रह्मोपादानता विज्ञायते अतः श्रुतीनां समन्वयः ब्रह्मण्येव सम्पादनीयः इति।

**❊ विरुद्धधर्माश्रयतावादः -**

यशाशास्त्रं ब्रह्मस्वरूपम् अस्माभिः ग्राह्यम्। परस्परविरुद्धानां नैकानां धर्माणां विधाने उपलभ्यमाने तदुभयाश्रयणं वरं न त्वन्यतरद्। उपनिषदः यादृशं ब्रह्मप्रतिपादयन्ति न तत् तर्कगोचरम्। वदन्ति चाचार्याः -

लौकिकं हि लोकयुक्त्यावगम्यते, ब्रह्म तु वैदिकं, वेदप्रतिपादितार्थबोधो न शब्दसाधारणविद्यया भवति।

उपनिषदश्चास्मिन्नर्थे –

**आसीनो दूरं व्रजति, शयानो याति सर्वतः।**
**कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति।।**[६]

**तदेकमव्यक्तमनन्तरूपम्।**[१] इत्याद्याः। अतः स्थूलह्रस्वादि विरुद्धधर्माश्रयम् एकमेवाद्वितीयं ब्रह्म वक्तव्यम्।

**❊ सत्कारणवादः -**

सदात्मना जगदिदमद्वैततां भजते। जगत्कारणं केवलं सत्ब्रह्म एव। सतः एव इदं उत्पद्यते सदेव उत्पद्यते। श्रुतिश्चेह

सन्मूलमन्विच्छ सन्मूलाः सौम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः।[२]

हे सोम्य इमाः सर्वाः प्रजाः सन्मूलाः, सदि स्थिताः। सति प्रतिष्ठिताश्च अतः सद्रूपाः इत्येव अवगच्छ इत्यर्थः। अत एव पत्रावलम्बने अपि श्रीमदाचार्याः कारणीभूतस्य सद्रूपत्वात् इत्याहुः।[३]

सत्कार्यवाददृष्ट्या सद्ब्रह्मणि यानि कार्याणि जायन्ते तान्यपि सदात्मकान्येव। यथा –

**सदेव सोम्येदमग्र आसीत्।**[४]

**असदेवेदमग्र आसीदेकमेवाद्वितीयम्।**[५]

अवरप्रपञ्चस्य त्रैकालिकब्रह्मसम्बन्धात् तत्ब्रह्मत्वं सिद्धमेव। असदासीत् इत्यस्य अव्याकृतात्मना जगदासीत् इत्यर्थः। आसीत् इति कथनात् सत्यत्वं जगतः गृह्यते इति वाल्लभाः भणन्ति।

**❋ आविर्भावतिरोभाववादः -**

जगदुत्पत्तेः पूर्वं तथा नाशादुत्तरं जगत्पदार्थाः सत्पदार्थेन सह सम्बन्धं न रक्षितुं प्रभवन्ति सर्वोऽपि सम्बन्धः विच्छिद्यते। द्वितीयम् अस्मद्भ्रान्ति। वस्तुतः नोत्पत्तिनाशाः प्रपञ्चे सन्ति। प्रपञ्चः आसीदपि भविष्यत्यपि च। तत्र केवलमभिव्यक्तिः अनभिव्यक्तिः वा भवितुमर्हति। जगति स्थिताः सर्वेऽपि पदार्थाः स्वस्मिन् न तत्त्वभूताः। मूलतत्त्वं सत् ततः अभिव्यज्यन्ते तस्मिन्नेव त तिरोहिताः भवन्ति। श्रुतिश्चेह -

तदैवेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियतासौ नामायमिदं रूपमिति।[१] श्रीवल्लभाचार्यैः विषयोऽयं सर्वनिर्णये कृतः प्रदर्शितः यथा - घटादीनामपि ब्रह्मत्वान्नित्यतेति वक्तुं युक्तिमाह -

**आविर्भावतिरोभावौ शक्ती वै मुरवैरिणः।**
**सर्वकारणस्वरूपेण भविष्यामीति या हरेः।।**

**वीक्षा यथा यतो येन तथा प्रादुर्भवत्यणः।**
**मृदादिभगवद्रूपं घटाद्याकारसंयुतम्।।**

**मलेच्छतस्तथा तस्मिन् प्रादुर्भावो हरेस्तदा।**
**तिरोभावस्तथैव स्यात् रूपान्तरविभेदतः।।**[२]

**❋ अविकृतपरिणामवादः -**

यथा कीरीटकुण्डलकेयूराद्याः अलंकारविशेषाः स्वर्णनिर्मिताः सन्तः स्वर्णम् इत्येव कथ्यन्ते। स्वर्णस्यैव विभिन्नाः नामरूपभेदाः इमे। एतेषामाभरणानां अग्निसम्पर्के पूर्वावस्थानं स्वर्णात्मना एव भवति तथा अनेक नामरूपादि सत्त्वेऽपि जगदिदं मूलकारणस्य ब्रह्मणः परिणाम एव। न हि दुग्धस्य

दध्याकारेण परिणामवद् अयं परिणामः अपि तु स्वर्णकुण्डलादिवत्। अत एव अविकृतपरिणामः इत्युच्यते। श्रुतयश्चेह भवन्ति -

**इदं सर्वं यदयमात्मा**[१]

**यद्भूतं यच्च भव्यम्।**[२]

आचार्याश्च **परिणमते कार्यकारणेति अविकृतमेव परिणमते सुवर्णम्।**[३] अतः सिद्धोऽयम् अविकृतपरिणामवादः।

**❊ कार्यकारणतादात्म्यवादः -**

अविकृतपरिणामवशादेव कार्यकारणयोः भेदसमानाधिकरणः अभेदः वक्तव्यः। एतदेवाचार्यचरणानां मते शुद्धाद्वैतम्।

तदुक्तमाचार्यैः -

तदेतत् त्रयं सदेकमयमात्मात्मो एकः सन्नेतत् त्रयम्[४] इयं श्रुतिः शुद्धाद्वैतसाधनाय प्रदर्श्यते। अनन्यत्वाधिकरणे च कार्यस्य कारणात् अनन्यत्वं वल्लभाचार्यैः उपस्थापितम्। इत्ययं शुद्धाद्वैतसिद्धान्तस्थ प्रमुखवादानां विमर्शः सम्पन्नः।

**❊ पुष्टिमार्गपरिचयः -**

प्रायः दार्शनिकानां सर्वेऽपि सम्प्रदायाः सिद्धान्तपक्षे, सदाचारपक्षे च भिद्यन्ते। वाल्लभसिद्धान्ते शुद्धाद्वैतं सिद्धान्तपक्षः। पुष्टिमार्गः आचरणविषयकः पक्षः। दार्शनिकसिद्धान्ते यद्यपि विष्णुस्वामिणः मार्गानुसरणं वल्लभश्रीचरणैः क्रियते इति उच्यते अथापि तदीयस्वप्रतिभाप्रकाशेन प्रकाशितः अयं पुष्टिमार्गः। पुष्टिमार्गः इति नामकरणं श्रीमद्भागवतानुसारेण क्रियते। पुष्टिः नाम पोषणं भगवदनुग्रह एवाऽत्र पोषणम्। उक्तञ्च **पोषणं तदनुग्रहः**[१] आद्रियते।

तदुक्तं भक्तिविषये वल्लभश्रीपादैः –

कृतिसाध्यं साधनं ज्ञानभक्तिरूपं शास्त्रेण बोध्यते। ताभ्यां विहिताभ्यां मुक्तिमर्यादा। तद्विहितानामपि स्वस्वरूपबलेन स्वप्रमाणं पुष्टिरित्युच्यते।[२] अतः मर्यादा मुक्तिः, मुक्तिः इति भेदः।

प्रेममार्गस्य सरलः सुगमश्चोपायः भक्तिः अतः पुष्टिमार्गः वल्लभाचार्यैः स्थापितः।

पुष्टि भक्तिः –

भगवतः विशेषानुग्रहवशात् या भक्तिः उत्पद्यते सा पुष्टिभक्तिः इति व्यवह्रियते। तदुक्तं –

**भक्तिस्तु विहिताऽविहिता चेति द्विधा।**[३]

बालकृष्णभट्टैश्च कृतं भक्तिलक्षणम् –

भगवत्स्वरूपातिरिक्त फलाकांक्षाविरहितत्वे सति भगवत्स्वरूपात्मक-फलाकांक्षावत्वम्।[४] इति। इदमेव पुष्टिभक्तेः लक्षणम्।

इयं पुष्टिभक्तिः नवविधा भक्त्यात्मना विभज्यते। नवविधाश्च –

**श्रवणं, कीर्तनं विष्णोः स्मरणं पादसेवनम्।**
**अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्।।**[१]

भक्तिमार्गाः प्रथिताः सन्ति।

एतादृशः पुष्टिभक्तिमार्गः सामान्यजनसमुद्धाराय वल्लभश्रीचरणैः प्रदर्शितः। इत्थं शाङ्कररामानुजवाल्लभमतानुसारेणवेदान्तानां परिचयं तच्चिन्तनप्रकारञ्चपरिचाय्य, इतः जिज्ञासाधिकरणात्समन्वयाधिकरणपर्यन्तं प्रतिपादितानां निर्दिष्ट भाष्यस्थ विशेषांशानामापात्तः विचारं कुर्मः इति शम्।

# चतुस्सूत्र्यन्तभाष्यसमीक्षा

**❋ जिज्ञासाधिकरणसमीक्षा -**

अद्वैतविशिष्टाद्वैतशुद्धाद्वैतमिति मतत्रयमधिकृत्य जिज्ञासाऽधकरणविचारः प्रस्तुतः। अस्मिन् समये कः समयः श्रेयस्करः इति विद्वांस एव निश्चिन्वन्तु। वयन्तु अल्पधियः केवलं मतत्रयसमीक्षामात्रं करिष्यामः। इतश्च जिज्ञासासूत्रं बादरायणाचार्योक्तं सर्वसिद्धान्तवादिसम्मतं पठ्यते -

**अथातो ब्रह्मजिज्ञासा।**[१] इति।

अथ अतः ब्रह्मजिज्ञासा इति त्रिपदात्मकं सूत्रमिदम्। अर्थस्तु अथ अत ब्रह्मजिज्ञासा इत्येव। सूत्रविभाग एव अर्थ इति कथमुच्यते इति चेन्न भ्रमितव्यम् अत्र। न हि सूत्रस्थ विविध आचार्यमुखारविन्दश्रुतानेकार्थप्रतिपत्तिः परमार्थतः सूत्रार्थ निरूपणक्षमा इत्यपि न चिन्त्यम्। आचार्यचरणयोः श्रद्धावतां स्वाचार्यवचः एव प्रमाणम्। शास्त्रप्रामाण्यं स्वाचार्यवचः प्रामाण्यं च श्रद्धावतामेव। नाऽश्रद्धालुः तत्प्रतिपद्यते। यथाशास्त्रम् अनुभवोऽपि श्रद्धावतामेव अतः जिज्ञासासूत्रार्थो नैकैः आचार्यैः नैकविध अर्थप्रतिपादनात् मीमांसितैव शारीरिकमीमांसा। अपि च परंपरा पाठवदर्थस्यापि गुरुमुखादेव श्रवणेऽपि मन्दमध्यमयोः संदेहो भवेत्।[२] इति वचनादपि मन्दमध्यमाधिकारिणामेव ईदृशी मीमांसा सापेक्षतामावहति। भगवत्पादाः शंकराचार्याः अपि तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि शास्त्राणि च[३] इति ब्रुवाणाः शास्त्रमविद्यावन्तमध्यासवन्तं पुरुषमुद्दिश्य एव प्रवर्तते, न ज्ञानिनं

प्रति इति वदन्ति। अर्थापत्या च उत्तमाधिकारिणामपि ज्ञानिनामिव स्वाचार्यवचनोत्तरं शास्त्रपरिपालनादि-नियमनावश्यकता गम्यते।

रामानुजश्रीचरणाः अपि भक्तिप्रपत्तिभ्यां मोक्षः इति प्रतिपादयन्तः मोक्षमार्गे श्रीमन्नारायणस्य चरणारविन्दयोः अनन्यशरणागतिरेव साधनमिति गमयन्ति। अतः सिद्धं अर्थार्थित्वाभावेऽपि भगवद्भक्तिं कुर्वाणाः एव वस्तुतः उत्तमाधिकारित्वं भजन्ते। अस्मन्मते भगवदनुग्रहः गुर्वनुग्रहो वा मोक्षः। भगवताऽपि चोक्तम् -

**मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते।**
**श्रद्धया परयोपेतास्ते मे युक्ततमा मताः।।**[१]

अतः भगवद्भक्तः उत्तमाधिकारीति सर्वसिद्धान्तसम्मतम्। अत्रैतदवधेयम् -

**आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ।**
**तेषां ज्ञानी नित्ययुक्तो एकभक्तिर्विशिष्यते।।**[२]

**ज्ञानी त्वामैव मे मतम्**[३]

इत्याद्युक्तत्वात् -

**ज्ञानाग्निः सर्वकर्मणि भस्मसात् कुरुतेर्जुन**[४]

**न हि ज्ञानेन सदृशं पवित्रमिह विद्यते**[५]

इत्यादि श्लोकैः ज्ञानिनः ज्ञानस्य च माहात्म्य श्रवणात्

**ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः**[६] इत्यादिना ज्ञानयज्ञेन एव भगवत्साक्षात्कारस्य इष्टत्वज्ञापनात् ज्ञानयज्ञः, मानसयज्ञ एव कार्यः।

स च ज्ञानयज्ञः ब्रह्मसूत्रभाष्याध्ययनमाध्यमेन सम्यक् अनुष्ठातुं शक्यः इत्याधुनिकविद्वन्मणयः प्रतिपादयन्ति। तत्साम्प्रदायानुसारेण ये उत्तमाः, उत्तमोत्तमाः, मन्दाः, मध्यमाः सर्वेऽपि सूत्रभाष्यानुसारेण न्यायप्रस्थानानुसारेण श्रवणमनन-निदिध्यासनमुखेन आत्मतत्त्वसाक्षात्कारं सम्पादयितुं प्रभवामः इति चिन्तयन्ति तैः तत्साक्षात्कारहेतुः तदेव सूत्रभाष्याद्यालोचनं विधेयम्।

अतः ब्रह्मजिज्ञासामुखेन अनर्थहेतोः संसारस्य प्रहाणाय सर्वैरपि दार्शनिकैः ब्रह्मजिज्ञासा प्रस्तूयते। कामः, क्रोधः, लोभः इत्येतत् त्रितयं नरकद्वारम् अतः तत् त्रितयमपि त्याज्यम्। एषणात्रयसंन्यासवानेव ज्ञानीति सर्वेषामपि दार्शनिकानाम् अभिमतः सिद्धान्तः।

कामक्रोधादिविशिष्टः संसारः अनर्थहेतुः। तस्मात् सामान्यमतीनामुद्धरं चिकीर्षवः परमकारुणिकाः भाष्यकाराः स्व स्व प्रतिभा प्रकाशेन सूत्राणामर्थं विवरयामासुः। तदत्र समीक्षणमुखेन किञ्चित् प्रस्तौमि।

अथातो ब्रह्मजिज्ञासा इति सूत्रस्थाऽथशब्दार्थः मतत्रयेऽपि स्फुटः। तदत्रापाततोऽतिविस्तारभयान्नविस्तरेण विचार्यते।

अथशब्दः - भगवत्पादैः शंकराचार्यैः आनन्तर्यम् इत्यर्थे स्वीकृतः।

अथशब्दः - भगवद्रामानुजाचार्यैः अपि आनन्तर्यार्थे उक्तः।

अथशब्दः - अधिकारार्थे स्वीकृतः श्रीवल्लभचरणैः।

अथशब्दस्य - मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथोऽथ इति अमरकोशे इमे पञ्चाधिकाः अर्थाः शास्त्रव्याख्यानदृष्ट्या सम्भवन्ति।

अत्र वल्लभाचार्याः आहुः -

अथशब्दो अर्थचतुष्टये वर्तते - मंगले, अधिकारे, आनन्तर्ये, अर्थान्तरोपक्रमे च।[१]

स्यादेतत् - अथशब्दः मङ्गलप्रयोजनः किं न स्यात् तत्राहुः भगवत्पादाः अर्थान्तरप्रयुक्त एव हि अथशब्दः श्रुत्या मङ्गप्रयोजनो भवतीति[२]

वल्लभाचार्या अपि - तत्र श्रुतिमात्रेणैव मङ्गलसिद्धेः अर्थान्तरस्य पूर्वोक्तस्याभावान्नात्र तत्कल्पनम्।[३] अतः श्रुत्या मङ्गलप्रयोजन एवाऽथ शब्दः। उक्तञ्च -

**ओंङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।**
**कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ।।**[४] इति

अतः मङ्गलार्थत्वं श्रुतिसिद्धम्। तद्वाक्यार्थे ग्राह्यम् इति न नियमः। तद्ग्रहणेऽपि अर्थासम्भवात् न तद्योग्यम्।

आनन्तर्यार्थे अथशब्दः इति वदन्तः शङ्कराचार्याः मङ्गलातिरिक्तार्थान्तर-मथशङ्कन्ते, न शङ्कन्ते।

किमानन्तर्यमथशब्देन उच्यते इति जिज्ञासामपाकर्तुं सुलभमाह भगवान्भाष्य-कारः। धर्मब्रह्मजिज्ञायोः फलभेदात् धर्मजिज्ञासानन्तरं ब्रह्मजिज्ञासा क्रियते इति नियमकल्पनावैय्यर्थ्यात् ब्रह्मजिज्ञासायाः कृते या सम्पत्तिः अपेक्षिता तामेवाह -

नित्यानित्यवस्तुविवेकः इहामुत्रफलभोगविरागः शमादि षट्सम्पत्तिः, मुमुक्षुत्वञ्च इत्याद्याम्।[५] एतदेव साधनचतुष्टयम् इत्युच्यते।

अयमेवार्थः श्रुत्यापि **परीक्ष्य लोकान्**[१] इत्याद्यया गम्यते।

अन्येऽपि अधिकारिपरीक्षालक्षणानि यमप्रलोभनानि तत्त्यागपूर्वकमेव तदधिकारित्वनिर्धारणम् इत्यादि प्रसङ्गाः साधनचतुष्टयसम्पन्नस्याधिकारितां गमयन्ति।

अतः निष्कृष्टमेवाधिकारित्वमथशब्देन गम्यते इति स्पष्टम्। रामानुजश्रीचरणास्तु पूर्वोत्तरमीमांसयोः एकशास्त्रत्वग्राह्यत्वम् उद्घोषयन्तः कर्मज्ञानपूर्विका एव ब्रह्मजिज्ञासा इति उपस्थापयन्ति। उक्तञ्च तैः अत्रायमथशब्दः आनन्तर्ये भवति। अतः शब्दो वृत्तस्य हेतुभावे। अधीतसाङ्गसशिरस्कवेदस्याधिगताल्पास्थिरफलकेवलकर्मज्ञानतया सञ्जातमोक्षाभिलाषस्य इति[१]।

अनेन स्पष्टं यत् **स्वाध्यायोऽध्येतव्यः**।[३] कर्मविचारेण कर्मफलमस्थिरम् अनित्यमल्पञ्चेति निर्णीय ब्रह्मज्ञानमात्रफलं स्थिरमिति मन्वानस्य ब्रह्मजिज्ञासा उपपद्यते इत्युक्तं भवति। वैराग्यवानेवाधिकारीति अर्थात् सिद्धम्। अथापि कर्मानुष्ठानेन विनैतत् न सिद्धयति इत्यतः तदानन्तर्यमेव ग्राह्यम्।

वल्लभश्रीचरणास्तु - अथशब्दस्य आनन्तर्यार्थत्वस्वीकारे अध्याहारः पुरुषार्थासिद्धिः, अधिकाकांक्षाभावः विचारोच्छेदः इतीमानि दूषणानि प्राहुः अतः आरम्भार्थे एवाऽथ शब्दः। उपरोक्तं दूषणचतुष्टयमपि अधिकरणविमर्शावसरे एवाऽभ्यस्तम् अतस्तत् पौनरुक्तदोषापत्तेः नावर्त्यते।

अस्मिन्मते असिद्धस्य साधनचतुष्टयस्य सम्पादनाय एव इयं जिज्ञासा क्रियमाणा वर्तते। उक्तश्च तदर्थः। कर्मानुष्ठाने सति चित्त शुद्धौ सत्यां वैराग्यादि, इदं च वेदान्त विचारव्यतिरेकेण न भवतीत्यन्योन्याश्रयः। निर्द्धारिते तु वेदान्त विचारो व्यर्थ एव।[१]

एतन्मतेन सिद्धयति यत् श्रवणमनननिदिध्यासनादि साधनानुष्ठानार्थः, अनुष्ठानारम्भार्थो वा अथ शब्दः।

अनेन निरूपणेन सिद्धं यत्, शाङ्करमते साधनचतुष्टय सम्पन्नः अधिकारी, श्रीवैष्णवमते - अधीतसाङ्गशिरस्कवेदः कर्मानुष्ठानरतः, तदनुयायिनी वाल्लभेऽपि - कर्मानुष्ठानदक्षः फलप्रेप्सुः, ब्रह्मवित् अनर्थनिवृत्तिपूर्वकब्रह्मानन्दावाप्तावधिकारीति।

विषयश्च ब्रह्मणः जिज्ञासा वेदान्तानामिति आपात प्रसिद्धी। अतः इत्यनेन पदेन हेतुः उक्तः। अस्मै फलाय इति। लौकिकस्य अलौकिकस्य वा स्वर्गादि अनित्यफलदायकत्वमस्ति अतः नित्यफलाकाङ्क्षिभिः ब्रह्मजिज्ञासा कर्तव्या इति। क्रियते इति वा।

शुद्धाद्वैतमते अत्र विशेषः - **ब्रह्मण्याधाय कर्माणि**[२] इत्यादि इत्याद्युक्तत्वात् जनकादयः देवतादीनामतिनैकट्यमवाप्य स्थिताः ब्रह्मवित्त्वात् कर्मानुष्ठान-फलमत्यन्तानन्दावाप्तिरूपम् अनुभवन्ति इति। अतः ईदृश परमानन्दप्राप्तये, कर्मफलाऽसक्तिरहितस्यैव परमानन्दः कर्मानुष्ठानफलात्मना प्रतिफलतीति हेतोः - अतः शब्दार्थः।

ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा इति विग्रहः। तत्पुरुषः समासः। शाङ्करास्त्वत्र कर्मणिषष्ठीति आहुः न तु शेषे। प्रधाने ब्रह्मणि जिज्ञासिते तदपेक्षितानामर्थादेव आक्षेपात् जिज्ञासा भवत्येव अतः साक्षात् ब्रह्म एव जिज्ञास्यम्। ज्ञातुमिच्छा जिज्ञासा। इच्छार्थे सन् प्रत्यये कृते अवगति पर्यन्तं ज्ञानं, सन्वाच्यायाः इच्छायाः कर्मत्वेनान्वेऽति इति सिद्ध्यति।

रामानुजीयास्तु - ब्रह्मणो जिज्ञासा इति कर्मणि षष्ठिं वदन्तोऽपि **कर्तृकर्मणोः कृती**ति[१] इति पाणिनीयं सूत्रमवतारयन्ति। सूत्रेणानेन कर्मार्थे

कर्त्रर्थे च षष्ठी भवति। प्रकृतस्थले ब्रह्मजिज्ञासितुं प्रवृत्तः तापत्रयातुरः जीवः अतः तदितरत् जिज्ञास्यं ब्रह्म एव ग्राह्यम्। **प्रतिपदविधाना षष्ठी न समस्यते**[२] इति विधानेन कर्मणि षष्ठी विरोधः न शङ्कनीयः। कृद्योगा च षष्ठी इति प्रतिप्रसवसद्भावात्।

उक्तषष्ठीस्वीकारेण रामानुजीयाः जीवब्रह्मणोः स्वाभीष्टं स्वसिद्धान्तपरिपोषकं ब्रह्मजीवयोः भेदमपि परिपोषयन्ति।

शुद्धाद्वैतिनस्तु कर्मणिषष्ठीति अव्याख्याय शेषषष्ठीति भणन्ति। शेषषष्ठीस्वीकारे ब्रह्म तत्सम्बद्धं सर्वमपि जिज्ञास्यत्वेन प्रतिज्ञातं भवति। जिज्ञासापदं चाऽस्मिन् सम्प्रदाये ज्ञातुमिच्छा इत्यस्मिन्नर्थे न अपि तु प्राचीनैः जिज्ञासितुमिच्छेत् विचारयितुमिच्छेत् इत्यादि उक्तत्वात् विचारार्थवसयि एव। न तु ज्ञातुम् इच्छा इत्याद्यर्थ कल्पनायामपि तत्रैव पर्यवसानदर्शनेऽपि गौरवदोषः। इत्थं सूत्रार्थः विस्पष्टं समधिगतः। समीक्षा च कृता। प्रकृते जिज्ञासाऽधिकरणस्थ जिज्ञासा शब्दस्य विचारार्थत्वे सिद्धे कथं व्याख्यानभेद इति पश्यामः।

कर्तव्या इति पदाध्याहारः कर्तव्यः इति शाङ्कराः। साधनचतुष्टयसम्पन्नेन अधिकारिणा मोक्षफलसिद्ध्यर्थं बोध्यबोधक भावसम्बन्धरूपा विचारणा जीवब्रह्मणोरैक्यावबोधिनी कर्तव्या इति सूत्रार्थः। तदुक्तं भाष्ये - तस्माद्यथोक्त साधनसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा कर्तव्या।[१] इति। अतः विचारस्य जिज्ञासायाः वा कर्तव्यता सिद्धा।

रामानुजीया अपि स्थिरफलमनन्तं च फलं कामयमानाः कर्मानुष्ठान-व्यापाराद्विरक्ताः भूत्वा श्रवणमनननिदिध्यासनादि व्यापारनिरताः सम्बन्धज्ञान-पूर्विकामुपासनां कुर्वाणा एव मोक्षं प्राप्नुवन्ति अतः तादृशैरेव ब्रह्मजिज्ञासा कर्तव्या इति वदन्ति।

शुद्धाद्वैतिनस्तु कर्तव्या इति पदाध्याहारं नेहन्ते। कर्तव्या इत्यध्याहारो कर्तव्यः इति चेत् केन कर्तव्यः इति प्रश्नः। अध्याहारः सर्वदा स्वार्थे भवति न तु परार्थे। अल्पज्ञाः अध्याहृत्य अपि साक्षात्कार समर्थाः न भवितुमर्हन्ति इति हेतो अध्याहारस्य वैय्यर्थ्यमेव। सामान्यत एव ब्रह्मणः ज्ञेयत्वे उक्ते व्यासकृतेः वैय्यर्थ्यापत्तिः। अतः अध्याहारः स्वयं कार्य उत परेण इत्यादि विचारे एव शास्त्रतात्पर्यनिर्गमनाभावात् सूत्रस्यैव उपयोगसमाप्तिः। सर्वस्यैव असङ्गतता स्यात्। अतः व्यासोक्तत्वादेव ब्रह्मजिज्ञासा कर्तव्या इति अर्थः सिद्धयति।

❊ **शाङ्करा आहुः -**

धर्मब्रह्मणोः जिज्ञासाफलभेदः वर्तते इति। तदुक्तम् – अभ्युदयफलं धर्मज्ञानं तच्चानुष्ठानापेक्षम्।[२] निःश्रेयसफलं तु ब्रह्मविज्ञानं न चानुष्ठानान्तरापेक्षम्।। अतः धर्मस्य अनुष्ठानसाध्यफलवत्त्वात्, ब्रह्मविज्ञानस्य च सर्वकर्तव्यताहानिः निरनुष्ठानविषया फलविषयत्वेन प्रोक्तातः तयोरैक्यं शास्त्रात्मना विद्यमानं सदपि न ब्रह्मजिज्ञासायामिति विवेकः कर्तव्यः।

रामानुजीयास्तु वृत्तिकाराणामनुयायिनः पूर्वोत्तर मीमांसयोः एकशास्त्रत्वमुपस्थापयन्ति। नाऽस्माकमेकशास्त्रत्वे विप्रतिपत्तिरपि तु एकफलवत्वे एव। एकफलवत्त्वं नाद्रियते अस्माभिरपि, अपि तु नित्यमेव मोक्षफलमिति वदद्भिः नित्यत्वं सत्यत्वं वा परिच्छिन्नत्वे कथं सिद्धयतीत्येदपि विचारेणैव मतत्रयस्यापि विशेषतोऽवधारणं सम्पन्नम् इतश्चानेन प्रकारेण अथशब्दार्थकरणात् अप्येतत् स्पष्टम्। शुद्धाद्वैतिनामपि तत्तुल्यत्वम् इति अलमतिविस्तरेण।

अनेन प्रकारेण जिज्ञासाऽधिकरणसमीक्षा सम्पन्ना।

**❊ जन्माद्यधिकरणसमीक्षा -**

जिज्ञासाधिकरणे ब्रह्म जिज्ञासितव्यम् इत्युक्तम्। जिज्ञास्यस्य ब्रह्मणः किं लक्षणमिति जिज्ञासामपाकर्तुं भगवान् बादरायणः सूत्रयाञ्चकार जन्माद्यस्य यतः इति।[३] यद्यपि सूत्राणि बादरायणरचितानि सर्वदार्शनिकानाम् आस्तिकानां मते समानानि अथापि तेषु सङ्ख्यायाः अधिकरणानाञ्च मतभेदः भाष्यकाराणां मते विद्यत इति ब्रह्मसूत्रग्रन्थपरिचयकाले एव अस्माभिः उक्तमासीत्। प्रकृतस्थले पुनस्तत् स्मारणं तावत् शुद्धाद्वैतमते जन्माद्यधिकरणसूत्रं शास्त्रयोनित्वादिति प्रमाणसूत्रसमन्वितमेव। अतस्तत् एकमेव सूत्रमिति ते शुद्धाद्वैतिनः कथयामासुः - जन्माद्यस्य यतः शास्त्रयोनित्वादिति।[४] अस्मिन् समीक्षाप्रसङ्गे अभ्यासार्थं जन्माद्यस्य यतः इति सूत्रार्धं लक्षणोपस्थापकं भागं व्याख्याय अन्ययोः मतयोः शास्त्रयोनित्वाधिकरणसमीक्षावेलायां सोऽपि सूत्रार्ध भागः विचारयिष्यते। इत्थमेव - लक्षणभागव्याख्यानोत्तरमेव अणुभाष्यकृता शास्त्रयोनित्वादिति प्रमाणभागव्याख्यानं भाष्यं वा अकारि अतोऽत्रापि इत्थमनुसरणे न विप्रतिपत्तिः विपश्चिदपश्चिमानामिति मन्महे।

स्यादेतत्। जन्माद्यस्य यतः इति सूत्रार्थस्य अद्वैतविशिष्टाद्वैत-शुद्धाद्वैतमतानां व्याख्याने कथं वैलक्षण्यं भवतीति प्रपश्यामः।

एकस्यैव कस्यचित् सतः जगत्कारणत्वं सर्ववादिप्रतिवादिसम्मतम्। किन्तु जगत्कारणत्वेन गृहीतं वस्तुविशेषं स्वीयया दृष्ट्या पृथग्रूपेण विलोकयन्तः भाष्यकाराः जिज्ञास्यवस्तुत्वेन प्रतिपादयन्ति। विलोक्यं चेदमाश्चर्यम् एकं सद्विप्राः बहुधा वदन्ति इति वाक्यम् अस्मत् दृग्गोचरतामावहति। ब्रह्म एव जगज्जन्मस्थितिलयकारणमिति वक्तृणां

भाष्यकाराणां मध्ये ब्रह्मणि विप्रतिपत्तयः वर्तन्ते। ब्रह्मणः साकारता आहोस्विन्निराकारता। सविशेषं ब्रह्म उत निर्विशेषम्। इदं सर्वमपि कल्पनं जिज्ञास्य ब्रह्मविषये एव अतः इमाः विप्रतिपत्तयः विशेषतां प्रतिपद्यन्ते अन्यथा ब्रह्मणः सर्वज्ञत्वं सर्वशक्तिमत्त्वञ्च सर्वेषामपि अभ्युपगमविषयमेत्येतत् न नः संशयः।

स्यादेतत्। सूत्रार्थस्याद्वैतादिदृष्ट्या समीक्षणं कुर्मः। जन्मादि अस्य यतः। इति त्रिपदात्मकं सूत्रमिदम्। रामानुजमते अपि समानः पदविभागः।

अत्रैतदवधेयम् - अद्वैतमते औपनिषदं निर्विशेषं ब्रह्म एव जिज्ञासाविषयं तच्च श्रुत्यादि प्रमाणगम्यं न इत्यतः अप्रमेयम्। अप्रमेयं वस्तु शास्त्रेण गम्यते इति वदतो व्याघातः अतः शास्त्रम् अज्ञानं मात्रं निवर्तयति इति उच्यते। अध्यारोपापवादप्रक्रियया शास्त्रेण ब्रह्मसमर्प्यते इति वेदान्तिनाम् आग्रहः।

अत्राहुः रामानुजाचार्याः सत्यसंकल्पः ज्ञानानन्दादि अनन्तकल्याणगुणः सर्वज्ञः सर्वशक्तिः श्रीमन्नारायण एव ब्रह्म इति। तदेव ब्रह्म जिज्ञास्यम्।

वल्लभाचार्यस्तु - कर्तृत्वादि धर्मविशिष्टं ब्रह्म एव जन्मादिसूत्रेण लक्ष्यते इत्याहुः।

अतः स्पष्टमद्वैतिनां मते निर्विशेषं जिज्ञास्यम्। द्वैतिनां मते सविशेषमिति। किन्तु आश्चर्यमिदं यत् विशिष्टाद्वैतिनः शुद्धाद्वैतिनश्च द्वैतमभ्युपगच्छन्तोऽपि कयाचिद्युक्त्या अद्वैतमेव समुपस्थापयितुमीहन्त इति।

जन्मादि इति पदं सूत्रकृता प्रयुक्तम्। अत्र शाङ्कराः जन्म उत्पत्तिः आदिः यस्य तत् जन्मादि। तद्गुणसंविज्ञानो बहुव्रीहिः इति वदन्ति। जन्मनः समासार्थैकदेशस्य गुणत्वेन विशेषणात्मना संविज्ञानमस्मिन् स्थले जायते अतः अत्र पूर्वोक्तः समासः।

रामानुजीयास्त्वत्र समाहारद्वन्द्वसमासमङ्गीकुर्वन्ति तथैव तद्गुणसंविज्ञानाख्यं बहुव्रीहिमपि। एतद्विषयकं विवरणं विमर्शावसरे प्रस्तुतम्। वैलक्षण्यञ्चाऽस्मिन् समासाभ्युपगमविषये शुद्धाद्वैतिनां वर्तते।

जन्म आदिः येषाम् इति अवयवसमासमङ्गीकुर्वद्भिः वाल्लभैः अतद्गुणसंविज्ञानः बहुव्रीहिः आश्रीयते। जन्म अस्ति आदौ येषां ते जन्मादि व्युत्पत्तिश्चेह - जन्म आदिः प्रथमोऽवयवः येषां ते जन्मादि। सुपां सुलुगिति जसो लुगित्यवयवसमासादिति भावप्रधानो निर्देशः। तथा चादिपदाविशेष्यकावायव-समासत्त्वाद् तद्गुणसंविज्ञानो बहुव्रीहिः इत्यर्थः। तदुक्तमाचार्यैरेव - जन्म च आदिश्चेत्येकवद्भावः। जन्मादिः येषामित्यवयवसमासादतद्गुणसंविज्ञानो बहुव्रीहिः।[१]

जन्माद्यस्य यतः इति सूत्रात् आद्यस्य जन्म यतः इति विग्रहं कुर्वद्भिः वल्लभाचार्यैः आद्यस्य आकाशस्य जन्म उत्पत्तिः यतः तत् कारणं ब्रह्म इति व्याख्यातम्। श्रुतिश्च या **तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः**[२] इति प्रमाणभूता च विवक्षिता। इत्थं जन्मादि इतिपदं विचारितम्। अत्र समासग्रहणवैलक्षण्यं भाष्यकाराणां यद्यपि वर्तते अथापि विवक्षितं जगदुत्पत्तिस्थितिलयादिकं ब्रह्मभिन्नात् कारणान्तरात् न सम्भवति इति अभिप्रायः समानः। उत्पन्नस्य जगतः सत्यत्वमिथ्यात्व विषयकः संशयः अद्वैतव्याख्यानम् अजानद्भिः कर्तुं शक्यः। मिथ्याभूता इयं सृष्टिरिति

अद्वैतिनामाघोषः। स्वप्नतुल्यम् इदं सर्वमिति ते निगदन्ति। वस्तुतः यं प्रति यथा विश्वं वस्तु वा दर्श्यते स तत् तथैव गह्णाति इति सिद्धम्। उक्तञ्च कारिकाचार्यैः -

**यं भावं दर्शयेद्यस्य तं भावं स तु पश्यति।**
**तं चावति च भूत्वाऽसौ तद्ग्रहः समुपैति तम्।।**[३]

अतः द्रष्टॄणां दृष्टिभेदात् बहवो अर्थाः प्रतिपत्तुं शक्याः। भाष्यकाराणां भगवत्पादशङ्कराचार्याणां दृष्ट्या प्रपञ्चः मिथ्या। तदितराः प्रपञ्चसत्यत्ववादिनः आचार्याः इति लोकसिद्धम् । प्रपञ्चस्य मिथ्यात्वं कथमित्याह -

**स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा।**
**तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः।।**[४]

अतः स्वप्नवन्मिथ्याप्रपञ्चः। तर्हि किमर्थानि सृष्ट्युत्पत्यादि वाक्यानि मिथ्याभूतायाः सृष्टेः कथयितुः वेदस्य मिथ्यावाचित्वात् प्रामाण्यमपि विहन्येत इति चेत् - तत्प्रतिविधीयते - सृष्टिवाक्यानि कारणमात्रस्य ब्रह्मणः सत्यत्वं प्रतिपादयन्ति मृत्तिकेत्येव सत्यम्[५] इति। अतः ब्रह्मणः कारणत्वप्रतिपादनाय सृष्टिवाक्यानां प्रवृत्तिः। तत्रैव तात्पर्यमपि अद्वितीये ब्रह्मणि वेदान्तानां वर्तते इति साधयितुं शक्यम्। अतः अद्वितीयं ब्रह्ममात्रं जगत्कारणत्वेन साधयितुं शक्यम्। अतः अद्वितीयं ब्रह्ममात्रं जगत्कारणत्वेन विवक्षितम्। तस्मात् सद्सद्भ्यामनिर्वचनीयतया भासमानत्वात् ज्ञाननिवर्त्यत्वात्, प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वात् सद्विविक्तत्वात् वा प्रपञ्चस्य मिथ्यात्वं निश्चप्रचमिति।

अतः सृष्ट्युत्पत्यादि ग्राहकाणि वाक्यानि न सृष्टेः उत्पत्यादिकं सत्यमिति बोधयितुं प्रवृत्तानि इति सिद्धम्। किन्त्वत्र उत्पत्तिकारणत्वेन

विवक्षितं सर्वज्ञं सर्वशक्ति ब्रह्म सोपाधिकं, मायशबलम् इति उच्येत। मायायां सर्वमसङ्गतमपि सङ्गतमिव भवति। अतः अध्यारोप अपवादप्रक्रियया श्रुत्या सर्वं सिसाधयिषितमिति न कापि अनुपपत्तिः। एततद्वैतमतम् अनङ्गीकुर्वद्भिः प्रपञ्च सत्यत्ववादिभिः रामानुजा-चार्यादिभिः जगतः सत्यत्वमङ्गीक्रियते। तदनुयायिभिः वल्लभाचार्यैरपि जगतः सत्यत्वमङ्गीक्रियते किन्तु तन्मते संसारः अनित्य इत्येतद्वैलक्षण्यं विवक्षणीयमतः अद्वैतादि सिद्धान्तस्वारस्यमादावुपन्यस्य अस्य इति सूत्रस्थ पदविमर्शः क्रियते।

शाङ्कराः सूत्रस्थमस्येति शब्दं व्याख्यान्ति। इदं शब्देन पुरोवर्ति सन्निधापितस्य वस्तुनः निर्देशः क्रियते अतः पुरोदृश्यमानं जगदेव गृह्यते। तच्च जगद्विशेषणैः चतुर्भिः विशेषितं सत् सर्वज्ञात् सर्वशक्तेः कारणाद्भवति इति वाक्यशेषः ग्राह्यः।

सर्वज्ञः सर्वशक्तिः इत्यादीनि विशेषणानि अपि निर्विशेषस्य यथावत् स्वरूपं गमयितुमशक्तानि अथाऽपि अध्यारोपापवादप्रक्रियामाश्रित्य निरूप्यमानत्वात् नाऽविशेषः।

विशेषणचतुष्टयञ्च नामरूपाभ्यां व्याकृतमित्यादि जगतः विशेषमवगमयति यत् नामरूपव्याकरणमेव जगत्शब्दवाच्यं तच्च विकारजातं समग्रमपि न सत्यं कारणमात्रस्य सत्यत्वोक्तेः इति विशेषः।

रामानुजीयास्तु - अस्येति पदार्थं जगत् द्वाभ्यां विशेषणाभ्यं विशेषयन्ति - अचिन्त्यविविधविचित्ररचनस्य नियतदेशकालफल-भोगब्रह्मादिस्तम्बपर्यन्तक्षेत्रज्ञमिश्रस्य इति। अत्र प्रथमं विशेषणम् अचरं अचिदंशं ग्राहयति, द्वितीयञ्च चरममंशम् इति विवेकः।

शुद्धाद्वैतिनस्तु – अस्य इति जगतः इत्येव स्वीकुर्वन्ति। किन्तु संसारः तैः भिन्नः स्वीक्रियते।

जगत्संसारयोः भेदः अस्मिन् मते एव विशेषतः दृश्यते। उक्तञ्च तैः – ईश्वरेच्छया चिदानंदांशतिरोभावेन सदंशात् प्रादुर्भावितं यत् तत् जगत्। अविद्या या जीवेन अहंता ममतादिरूपेण कल्पिता स संसारः। स्वरूपाज्ञानं देहाध्यासः इन्द्रियाध्यासः प्राणाध्यासः अन्तःकरणाध्यासः, द्वितीयं पञ्चपर्वात्मिका अविद्या। संसारस्य अविद्याकल्पितत्वात् ज्ञानेन नाशः। जगतः तु ब्रह्मरूपत्वात् नाशः न सम्भवति। द्वैतमविद्यया न जायते अपि तु अहं भिन्नोऽस्मात् इत्याकारकं ज्ञानमेव अविद्या। सा च ज्ञाननाश्या। उक्तञ्च – अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः।[१] जीवोत्पत्तौ नाविद्या कारणम्। आनन्दांशतिरोभावे तु तस्याः कारणत्वमस्त्येव। तदैव जीवः संसारीत्यभिधीयते। जगतः निमित्तकारणं ब्रह्मोपादानं ब्रह्मशक्तिः। शक्तिशक्तिमतो अभेदात् ब्रह्मैव वा। संसारस्य तु कल्पितत्वात् न निमित्तमविद्या। नोपादानं कल्प्यम्। संसारस्य नाशः सम्भवति। जगतः तु परमात्मेच्छया लयः सम्भवति। अध्यासानां निवृत्तिरेव संसारनिवृत्तिः स एव मोक्षः। अत एव अविद्यानिवृत्तौ जगति स्थितस्यापि ज्ञानिनः न सुखदुःखाद्यनुभवः। निन्दाबोधिन्याः श्रुतयः संसारनिन्दकाः अतः नाणुमात्रेणापि लक्षणाश्रयणादिकं सम्भवति। तस्मात् जगत्संसारयोः भेदे सिद्धे अस्येति पदस्य जगदर्थबोधकत्वमपि एतन्मते स्पष्टम्। आद्यस्य जन्म इत्यादि विग्रहे कृते तु अस्येति पदाऽभावे न तच्चिन्ताकारणम्। इत्थमस्येति पदस्य समीक्षा विहिता।

**❋ सूत्रस्थं यतः इति पदं विचारयामः -**

शाङ्करमते यतः इति पदेन सर्वज्ञं सर्वशक्तिमत् ब्रह्म ग्राह्यम्। रामानुजमते - अनन्तकल्याणगुणं जगत्कर्तृ ब्रह्म जिज्ञास्यत्वेन उपन्यस्तमेव यतः इति कारणवाचिशब्दाभिधेयम्। शुद्धाद्वैतिनस्तु कर्तृत्वादिधर्मविशिष्टमेव ब्रह्म विवक्षितम् इत्याहुः।

ब्रह्मणः कारणता स्वरूपञ्च उभयमपि सर्ववादि प्रतिवादिमते समानमेव। ब्रह्मैव जगदभिन्ननिमित्तोपादानम् इति सर्वेषां मते सिद्धम्। परस्परं विरुध्य क्रियमाणे व्याख्याने द्वैतिभिः अद्वैतिनां मते तन्नसम्भवतीति निरूपितं स्यात्। अस्त्येव। अथापि विवर्तोपादानत्वमेव सिद्धान्ते युक्ततमं भाति। प्रपञ्चस्य सत्यत्वमाहोस्विन्मिथ्यात्वम् इत्यस्मिन् संशये शंकरभगवत्पादाः सत्यं नाम त्रिकालाबाध्यम्। यद्रूपेण यन्निश्चितं तद्रूपमव्यभिचरत् तत् सत्यमित्युच्यते[१] मिथ्या च कल्पितं सदसद्भ्यामनिर्वचनीयम् इति। माया च -

**सन्नाप्यसन्नाप्युभयात्मिका नो**
**भिन्नाप्यभिन्नाप्युभयात्मिका नो।**
**साङ्गाप्यनङ्गाप्युभयात्मिका नो**
**महाद्भुताऽनिर्वचनीय रूपा।।**[२]

अतः अद्वैतसिद्धान्तः स्पष्टतया शुद्धात्मना च प्रतिभासते। अकाटयाः अद्वैततर्काः अवैदिकैरपि इति तु निश्चप्रचम्। किन्तु रामानुजानां शुद्धाद्वैतिनाञ्च मते किं सत्यं नाम इति प्रश्न एव भवति। कुतोऽयं प्रश्नः नाम - जगत्सत्यत्वं वदद्भिः किं नाम सत्यमिति उच्यते चेत् युक्तं स्यात्। सत्यत्वं शाङ्कराणामिव चेत् प्रपञ्चस्य प्रत्यक्षेण बाधदर्शनात् निराधारं

वचनमिति प्रतिभाति। ततश्च द्वैतवादिभिः श्रुतयः प्रपञ्चोत्पत्तिवादिन्यश्च सर्वथैव प्रपञ्च सत्यत्वमेव गमयन्ति इति उच्यते चेदपि अद्वैतवादिनीनां श्रुतीनां सत्त्वात्, द्वैतनिन्दाश्रुतीनां दर्शनात्, अद्वैतनिन्दा श्रुतिनां दर्शनाऽभावाच्च न तत् जगत्सत्यत्वं स्वरसमिति मन्महे। सप्तानुपपत्यादिकञ्च अनधिगताद्वैतसिद्धान्तस्वारस्यरहस्यविजल्पनम् एव। स्यादेतत्।

सर्वेषामपि वादिनां मते यतो वा इमानि भूतानि जायन्ते इतीदं श्रुतिवाक्यमेव अधिकरणस्यास्य विषयवाक्यं वर्तते।

वस्तुतः येन जातानि जीवन्ति इत्यमुमंशं शतप्रतिशतं श्रद्धया अङ्गीकुर्वद्भिः अन्नपानादिसंग्रहत्याग एव कर्तव्यः। स्वतः सिद्धस्य भगवद्भक्तपरिपालनात्मकस्य भगवतः सत्त्वस्य स्मरणादपि अयमेव अर्थः प्रतिफलति। इत्थं जन्माद्यधिकरण समीक्षा सम्पन्ना। अन्यत् सर्वमवदातम्।

**❋ शास्त्रयोनित्वाधिकरणसमीक्षा -**

त्रिष्वपि मतेषु शास्त्रमेव मुख्यं प्रमाणं ब्रह्मस्वरूपनिरूपणव्यापारे इति निश्चितं मतम्। शास्त्रातिरिक्तेन केनाऽपि प्रमाणेन ब्रह्म अधिगन्तुं न शक्यम् अतः शास्त्रं मात्रं प्रमाणम्।

शास्त्रस्य प्रामाण्यं सर्ववादिसम्मतम् अथापि शाङ्करमते प्रत्यक्षादिप्रमाणानामिव वस्तुस्वरूपं समर्प्य शास्त्रमपि निवर्तते अतस्तत् वस्तुस्वरूपसाक्षात्कारोत्तरं मिथ्या इत्युच्यते। एतदुपजीव्यविरोधं मन्वानाः असहमानाश्च विचारमिमम् अन्ये दार्शनिकाः शास्त्रमात्रैकपरायणाः ब्रह्मज्ञानं शास्त्रादेव भवतीति मन्यन्ते।

विग्रहभेदेन सर्वेऽपि भाष्यकाराः अर्थं वर्णयन्ति। श्रद्धाकारणात् भक्त्या वा ब्रूताम्, अथवा युक्तिसिद्धत्वात् श्रुतिसिद्धत्वाच्च वा ब्रूताम्

अस्मद्दृष्ट्या तु शाङ्करमतमेव साधु इति प्रतिपाद्यते। मतान्तराणां प्रतिष्ठा तु अन्यत्रान्यत्र अस्माभिः अप्याद्रीयते। अविरुद्धमंशं भगवत्पादा अपि अङ्गीकृतवन्तः अतः विशिष्टाद्वैतादिमते प्रतिपादिताः भक्तिप्रपत्तिभ्यां मोक्षः इत्याद्याः अंशाः शाङ्करसिद्धान्ताविरोधिनः समादरणीयाः सन्ति। रामानुजाद्याचार्याणाम् अस्मदाद्यपेक्षया भक्तश्रेष्ठत्वमस्तीति हेतोरपि ते वन्दनीयाः इत्येव मन्महे। अत्रैतत् शास्त्रयोनित्व सूत्रविवक्षायां स्वान्तः-करणभावप्रकटीकरणं प्रमाणस्यास्य प्रामाण्योत्तर सत्यमिथ्यात्वविचारार्थमेव। विचारिते च सत्यत्वमिथ्यात्वेऽपि विरोधपरिहाराय वेति मन्तव्यम्। त्रिष्वपि मतेषु शास्त्रयोनित्वादिति[१] सूत्रसमासविग्रहः भिन्नया रीत्या प्रदर्शितः। तदत्र पश्यामः।

**❊ शाङ्करमते द्विधा विग्रहः -**

प्रथमे वर्णके शास्त्रस्य योनिः इति षष्ठीतत्पुरुषः। द्वितीये वर्णके शास्त्रं योनिः कारणं प्रमाणमस्य ब्रह्मणो यथावत्स्वरूपाधिगमे। इति।

रामानुजमते - शास्त्रं यस्य योनिः कारणम्, प्रमाणं तत् शास्त्रयोनिः, तस्य भावः शास्त्रयोनित्वम् इति।[२]

शुद्धाद्वैतनये तु - शास्त्रे योनिः शास्त्रयोनिः शास्त्रोक्तकारणत्वात् इत्यर्थः।[३] इत्थं त्रिभिः त्रिधा विग्रहं कृत्वा त्रिप्रकारकः अर्थः प्रतिपादितः। यद्यपि रामानुजाचार्यैः शाङ्करमतोक्त द्वितीयवर्णकार्थ एव प्रतिपादितः अथापि प्रथमवर्णकगतार्था-नङ्गीकारादेव अत्र वैलक्षण्यं द्रष्टव्यम्।

शुद्धाद्वैते तु शास्त्रेण ब्रह्मणः कारणत्वं प्रतिपाद्यते अतः ब्रह्म जगज्जन्मस्थिति-लयकारणम् इति ग्राह्यमेकसूत्रत्वात्, तन्मते न विभक्तार्थकल्पना न्याय्या।

प्रकृत सूत्रे शास्त्रम् इति प्रयोगः सूत्रकारेण कृतः। शास्त्रं नाम ऋग्वेदादि तच्च शाङ्करमते सिद्धम्। महतः ऋग्वेदादेः शास्त्रस्य, अनेकविद्यास्थानोपबृंहितस्य सर्वज्ञकल्पस्य कारणं ब्रह्म इति वदता भाष्यकारेण शास्त्रं ऋग्वेदादि इति अभ्युपगतं भवति। ऋग्वेदादि शास्त्रस्य कारणत्वात् अपि ब्रह्म सर्वज्ञं सर्वशक्ति जगत्कारणम् इति स्थिरं भवति। अथापि शास्त्रत्वेन ऋग्वेदादेरभ्युपगमादपि भाष्यकाराः शङ्करभगवत्पादाः वेदान्तानामेव प्रामाण्यं ब्रह्मस्वरूपाधिगमे इति वदन्ति। तदिदमसहमानाः इतरे भाष्यकाराः तद्विलक्षणं तत्त्वं ग्राहयितुम् उद्यताः -

वेदान्ता अपि वेदा एव इति। पूर्वकाण्डमिव वेदान्ता अपि स्मृता एव। उक्तञ्च स्वयम्भुरेष भगवान्। वेदो गीतस्त्वया पुरा। शिवाद्या ऋषिपर्यन्ताः। स्मर्तारोऽस्य न कारकाः। अतः वेदानामलौकिकार्थस्य कर्मकाण्डे ज्ञानकाण्डे चोभयत्र प्रकाशितत्वाभ्युपगमात्, न केवलं वेदान्तयोनित्वं ब्रह्मणः अपि तु पूर्वोत्तरकाण्डप्रतिपादितत्वमिति मन्तव्यम्। इत्थं वाल्लभाः अङ्गीकृतवन्तः।

रामानुजाचार्यैस्तु मीमांसकमतं नैय्यायिकमतञ्च उद्धृत्य खण्डितम्। शास्त्रं मात्रमेकमेव प्रमाणमिति तैः समुपस्थापितम्। (शाङ्करमतोक्तं प्रथमे वर्णके शास्त्रस्य योनित्वं कारणत्वं ब्रह्मणः न सम्भवति इत्याकारकं प्रतिपादनं तद्विरुध्य प्रतिपादनं वा भाष्यकारैरन्यैः न कृतं दृश्यते।) प्रमाणितञ्च शास्त्रं यतो वा इमानि भूतानि जायन्ते इति। अतः न संशयः। किन्तु रामानुजमते पूर्वोत्तरमीमांसयोरेकशास्त्रत्वं प्रथमाधिकरणे एव समुपस्थापितम् इति न विस्मर्तव्यम्। अत एव शुद्धाद्वैतमते शास्त्रम् इति शब्दमधिकृत्य वेदान्तानां शास्त्रत्वम् (वेदत्वमुत वेदशेषत्वमिति) विचार समानः विमर्शः, शास्त्रयोनित्वाधिकरणे रामानुजमते न कृतः।

शास्त्रस्य कारणत्वञ्च **अस्य महतो भूतस्य निःश्वसितमेतत् यदेतत् ऋग्वेदः।**[१] इति वाक्येन समर्थितम्। एतत् गौणमुत मुख्यं चिन्तनं विहितं न वर्तते। मुख्यमेव भगवत्कर्तृकत्वमिति स्वीकारात्। स्वयम्भूः भगवान् एव वेदान् गीतवान् इति तस्य वेदकर्तृत्वं सिद्धमेव।

इतश्च वेदानां प्रामाण्यं किं स्वाभाविकम् उत न इति सामान्यजनहृदयसंशयोच्छित्त्यर्थं व्याख्यातृभिः अस्मिन्नेव प्रसङ्गे निःस्वार्थबोधकत्वादपि वेदाः प्रमाणमिति व्याख्यायते।

सिद्धं वस्तु प्रमाणान्तरगम्यमेवेति नियममपोद्य शास्त्रं वर्तते अतः सिद्धवस्तुनः प्रमाणान्तरगम्यत्वमिति नियमः सिद्ध्येत। सामान्यश्च नियमः - न हि नेत्राभ्यां दृष्टं घ्राणेन श्रोत्रेण वाऽघ्रातुं श्रोतुं वा शक्यमिति। अत्रैव नियमापवादं पश्यमः नात्यधिकं चिन्तनमत्र सापेक्षम्।

जन्मादिसूत्रेणानुमानं मात्रमुपन्यस्तं स्यादित्याशङ्का शङ्कराचार्यैः वेदान्तवाक्यानि एव सूत्रैरुदाहृत्य विचार्यन्ते इत्युक्त्वा परिहृता। समानः पन्था रामानुजाचार्यैरपि आदृतः। अतः शास्त्रयोनित्वसूत्रं पृथगेव शास्त्रस्य प्रमाणतां गमयति इति निश्चप्रचम्।

पूर्वकाण्डे अर्थवादवाक्यानामिव वेदान्तवाक्यानामपि तथैव अर्थवत्त्वं वक्तव्यम् इत्याद्याक्षेपः पूर्वोत्तरमीमांसयोः मध्ये पूर्वमीमांसायाः उत्तरमीमांसायाश्च प्रतिपाद्य-भेदाभ्युपगमे सम्भवति, न त्वित्थं स्यादणुभाष्यमते द्वयोरपि भागयोः परमार्थवस्तुबोधकत्वाभ्युपगमात्। इतश्चात्र शास्त्रयोनित्वाधिकरण-समीक्षा। सम्पन्नेति वदामः।

## ❊ समन्वयाधिकरणसमीक्षा -

तत्तुसमन्वयात् इति सूत्रार्थं विचारयामः।

तत्तु समन्वयात्।[१] इति सूत्रं वाल्लभरामानुजीयशाङ्कर-मतेषु त्रिष्वपि समानतामावहति। तु शब्दः सूत्रगतः प्रसक्तामाशङ्कां पूर्वपक्षं वा व्यावर्तयति इति त्रिष्वपि समानः पन्था।

तत् शब्देन - सर्वज्ञस्य सर्वशक्तेः ब्रह्मणः कारणत्वं वेदान्तशास्त्रादेव अवगम्यते अतः शास्त्रप्रमाणकं तत् ब्रह्म इत्ययमर्थः शाङ्कररामानुजयोरुभयोरपि सम्मतः, वाल्लभास्तु तद् ब्रह्मैव समवायिकारणम् इति व्याख्यान्ति। यद्यपि शाङ्कररामानुजयोः विवक्षासमाना दृश्यते अथापि पूर्वपक्षः किञ्चित् भिद्यते।

समन्वयः - इति पदस्य, सम्यक् अन्वयः इति अर्थः, वादिप्रतिवादिसिद्धोऽपि तस्य पूर्वपक्षानुसारेण व्याख्यानमपि सिद्धान्तदृष्ट्या भिद्यते।

वेदान्तमते शङ्करभगवत्पादाः **आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्**[२] इति सूत्रमुद्धृत्य पूर्वपक्षं पोषितवन्तः। विवक्षा च तेषां -

## ❊ शास्त्रयोनित्वाधिकरणे -

द्वितीयेवर्णके शास्त्रेणैव प्रमाणेन ब्रह्म अधिगम्यते इति यदुक्तं तद् आक्षिप्य सिद्धान्तिना आक्षेपनिरसनपुरस्सरं समन्वय सूत्रसाधारं शास्त्रप्रमाणकत्वमुपस्थाप्यते इति।

शाङ्करमते सूत्रार्थः - सर्वज्ञं सर्वशक्ति ब्रह्म जगदुत्पत्तिस्थितिलयकारणं वेदान्तशास्त्रादेव अवगम्यते इति। शास्त्रस्य तादृशविषये एव तात्पर्यावगमात्।

सर्वेषु हि वेदान्तेषु वाक्यानि एतस्यैवार्थस्य प्रतिपादकत्वेन समनुगतानि।[१] अस्मिन् वाक्ये तात्पर्येण इति उक्तत्वात् सदेवसोम्येदमग्र आसीत्। **एकमेवाऽद्वितीयम्।**[२] **ब्रह्मैवेदममृतं पुरस्तात्**[३] इत्यादि वाक्यानां तात्पर्यस्य तत्रैव दर्शनाच्च सम्मतोऽयं सिद्धान्तपक्षः।

तात्पर्यग्राहकानि च लिङ्गानि उपक्रमोपसंहारावित्यादि श्लोकगतानि शास्त्रप्रपञ्चे प्रसिद्धानि एव सन्ति। तेषां सहाय्येन उपनिषद्वाक्यानां पौर्वापर्यमालोच्य शास्त्रनिरूपणानुकूलयुक्तिप्रदर्शनेन समन्वयः दर्शितः। अतः वेदान्तदिशा इत्थं व्याख्यानं युज्यते।

श्रीभाष्यकृन्मते तु, तुशब्दः प्रसक्तामाशङ्कां निवारयति। तत् ब्रह्मणः शास्त्रप्रमाणकत्वं समन्वयात् परमपुरुषार्थतयाऽन्वयात्, परमपुरुषार्थस्यैव ब्रह्मणः अभिधेयत्वेनान्वयात् सम्भवति।

समन्वितो हि औपनिषदः पदसमुदायः[४] इति वाक्येन अत्रापि श्रुतिसमन्वयः जगज्जन्मस्थितिलयकारणभूते ब्रह्मणि प्रदर्शितः।

वाल्लभमते तु तु शब्दः पूर्वपक्षं निवर्तयति। तत् ब्रह्म एव समवायिकारणमपि समन्वयात् - सम्यगनुवृत्तत्वात्। यथा पटे तन्तवः अनुस्यूतरूपेण भवन्ति तथा ब्रह्म अपि जगति अनुस्यूतरूपेण अनुगतं वर्तते - तदुक्तं भाष्यकृता - अस्तिभातिप्रियत्वेन सच्चिदानन्दरूपेण अन्वयात्। नामरूपयोः कार्यरूपत्वात्।[५]

इत्थं त्रयाणामपि मतानामनुसारेण सूत्रार्थे व्याख्यानेऽपि पूर्वपक्षवैषम्यं वैषम्यं विचारयामः -

अद्वैतिनां मते निरूपयामः -

मीमांसाशास्त्रे आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम् इति सूत्रं पूर्वपक्षसूत्रात्मना वर्तते। अत्र भाष्यकारेण स्वप्रतिपाद्यपूर्वपक्षदृढीकरणाय सूत्रमिदमुदाहृतम्।

स्यादेतत्, आम्नायस्य क्रियापरकत्वं विवक्षितं तस्मात् हेयोपादेयरहितं ब्रह्म शास्त्रेण समर्प्यते इति वदतो व्याघातः, मूकोऽहम् इति वचनवदिति ब्रूमः। इत्यभिप्रायः.

परिनिष्ठितं वस्तु एव हेयोपादेयरहितं वस्तु। तत् प्रमाणान्तरगम्यमेव इति पूर्वपक्षिमतम्। तत्सिद्धान्तप्रदर्शनावसरे पूर्वमेव खण्डितम्। अथापि हेयोपादेयरहितत्वात् ब्रह्मवस्तुनः, शास्त्रस्य च क्रियापरकत्वावगमात् कर्तृदेवतादिस्वरूपप्रकाशकत्वेन, उपासनादिक्रियान्तरविधानार्थत्वेन वा वेदान्तानां तात्पर्यं वक्तव्यम्। हेयोपादेयरहितत्वे पुरुषार्थासम्भवात् अर्थवादपरत्वं वा वेदान्तवाक्यानां वक्तव्यम्। अतः कथञ्चित् क्रियापरत्वं वक्तव्यं वेदवाक्यानाम् इति। तत्र कर्तृदेवतादि स्वरूपप्रकाशकत्वं प्रकरणान्तरभयान्नाभ्युपगम्यते चेदपि स्ववाक्यगत उपासनाद्यर्थत्वं तु वक्तव्यमेव इति पूर्वपक्षः।

रामानुजमते पश्यामः चेत् - शास्त्रयोनित्वात् तत्तु - समन्वयात् इति सूत्रद्वयमपि प्रयोजनत्वरूपां बुभुत्सां वक्ति। बुभुत्सा सर्वदा अज्ञातपुरुषार्थविषयिणी भवति। तस्याः यत्नसाध्यत्वात्। जन्मादिसूत्रेण ब्रह्मणः जन्मादि कारणत्वं लक्षणमवगम्यते। ततः ब्रह्म प्रमाणान्तरगम्यमेव इति शङ्कायां शास्त्रयोनित्वसूत्रावतारः। ब्रह्मणः अज्ञातत्वे प्रयोजनाभावे च बुभुत्सा नोत्पद्येता। तां बुभुत्सामूलां सप्रयोजनतां निरूपयति अनेन सूत्रेण।

अत्र पूर्वपक्षिणः आशङ्का वर्तते यत् -

प्रमाणान्तरागोचरता ब्रह्मणः वर्तते। अज्ञातत्वात् बुभुत्सा अपि वर्तते। प्रयोजनञ्च सुखस्वरूपत्वं दुःखनिवृत्तिरूपत्वं वा भवति। एतत्

प्रयोजनपर्यवसायित्वं शास्त्रस्योक्तम्। सुखदुःखादि साधनोपदेशः शास्त्रेण क्रियते। तस्य ब्रह्मोपदेशकत्वे उक्तप्रयोजनराहित्यमेव सिद्धयेत्। ब्रह्मणः उक्त सुखदुःखरूपत्वाभावात्। प्रयोजन-पर्यवसायित्वाभावे बुभुत्सा अभावः। अतः शास्त्रेण ब्रह्म न बोध्यते इति पूर्वपक्षः सिद्धः।

वाल्लभमते तु - ब्रह्मणः समवायिकारणत्वं, निमित्तकारणत्वमुत कर्तृत्वात्रत्वम् इति। समवायिकारणत्वमात्राभ्युगमे निमित्तकारणत्वस्य श्रुत्युक्तस्य सर्वज्ञत्व-सर्वशक्तित्वादिधर्मस्य चेतनाश्रयस्य धर्मस्य, हानिः स्यात्। मृदिव चाचेतनत्वमपि ब्रह्मणः प्रसज्येत। यतो वा इमानि भूतानि इत्यादि श्रुत्युक्त कारणता अपि परिह्रीयते। न्यायमत प्रवेश एव स्यात्।

किन्त्वत्र कारणताविषयकसंदेहस्य अवकाश एव नास्ति इति वक्तुं न शक्यते - जन्माद्यस्य यतः इति सूत्रे पञ्चम्यन्त निर्देशः कृतः। अयं पञ्चमीविभक्त्यन्त निर्देश एव संशयं जनयति। पञ्चम्यन्तप्रयोगेण कारणत्वे अवगतेऽपि उपादानत्व-कर्तृत्वयोरनवगमात् संशयः। समवायीकारणत्वमात्राभ्युपगमे साख्यमतवत् ब्रह्मणः विकृतत्वस्यापि संभवः अतः विचारार्थं समन्वयसूत्रं प्रवर्तते इति वदन्ति।

इत्थं पूर्वपक्षे निरूपिते परस्परमेतत् भाष्यत्रयस्य कथं सम्बन्धः इत्येतत् निरूप्यते। तत्रादौ अद्वैतवादिभिः भाट्टमतम् उद्धृत्य खण्डितम् इति जानीमः।

श्रीभाष्ये त्वयं विशेषः - हेयोपादेयरहितस्य ब्रह्मणः बुभुत्सा न जायेत इति वदता राजवंशोत्पन्नस्य पुरुषस्य जीवनं चाण्डालवंशे अप्रविष्टत्वात् प्रयोजनशून्यम् इति उच्यते। वस्तुतस्तु अविद्यया परमात्मतत्त्वविषयकं ज्ञानं तिरोहितं भवति। तत् सम्बन्धज्ञानपूर्विकोपासनया साधयितुं शक्यम्। तत्र राजकुमारदृष्टान्तः विशेषमावहति।

ततश्च रामानुजाचार्याः शाङ्करमतं दूषितवन्तः। शाङ्कराः वेदान्तवाक्यानि प्रमाणभूतानि सन्ति इत्यङ्गीकुर्वन्ति। किन्तु (वेदा अवेदा भवन्ति) (बृ.उ.) इत्यादि श्रुतिस्वारस्येन प्रत्यक्षादिप्रमाणमिव वस्तुस्वरूपसाक्षात्कारं कारयित्वा इमानि वाक्यानि अपि मिथ्याभूततां प्राप्नुवन्ति इति वदन्ति। अतः पुरुषार्थसिद्धयुत्तरं वेदानामपि प्रामाण्यं नावशिष्यते इति तदभिप्रायः।

इमं प्रकरणं, रामानुजाचार्याः दूषयन्तः वदन्ति - बालातुराद्युपच्छन्दवाक्यवत् एतेषां वाक्यानां प्रामाण्यं स्वीक्रियते चेत् वेदोक्तानामन्येषामपि वाक्यानामुच्छेदः भवेत्। उक्त वाक्यस्य अर्थसद्भावः न वर्तते इति निश्चये जाते श्रद्धा एव अपगच्छेत्। अतः वेदमन्त्राणां लौकिकप्रमाणमिव प्रमाणतामभ्युपगम्य प्रमेयसाक्षात्कारोत्तरं मिथ्यात्व कथनमसङ्गतम् इति।

किन्त्वनयोः द्वयोरपि शाङ्कररामानुजमतयोः पूर्वपक्षः एव अयुक्तः इति प्रतिपादयन्ति वल्लभाचार्याः।

**❋ वल्लभाचार्यमते -**

पूर्वपक्षसिद्धान्तयोः द्वयोरपि असंगतत्वात् शास्त्रयोनित्वपूर्वपक्ष-निराकरणाय तत्तु समन्वयात् इति पूर्वपक्षाभ्युपगमः न युक्तः।

जैमिनीप्रयुक्तां धर्मजिज्ञासां पूर्वकाण्डे एव समन्वितां प्रपश्यामः। सर्वस्मिन् वेदे धर्म एव जिज्ञास्यः इति नाऽर्थः अतः तद्गुरुणा व्यासेन ब्रह्मजिज्ञासा उक्ता। जिज्ञासाफलं तु संदेहनिवृत्तिरेव। अलौकिकं किञ्चित् जिज्ञासया भविष्यतीति न युक्तं कथनम्।

जिज्ञासायाः अलौकिककार्थसाधकत्वे वेद जिज्ञासा इत्येव उक्तमभविष्यत्। किन्तु न तथा धर्मब्रह्मजिज्ञासयोः पृथक्-पृथक् श्रवणात्। इत्यादि।

बहुजन्मनः प्रागुपाख्यानानां मिथ्यात्वं न केनापि उक्तम् इत्यादि विषयमुद्धृत्य रामानुजवत् वल्लभाचार्याः अपि शाङ्करमतसिद्धं वेदादीनां मिथ्यात्वं दूषयन्ति।

अत्रास्मदभिप्रायः - त्रिष्वपि मतेषु समन्वयस्य समानतायां सत्यामपि पूर्वपक्षग्रहणं यद्यवलोकयामः तर्हि शङ्करभगवत्पादमतमेव युक्तं भाति। हेयोपादेयरहितं ब्रह्म समन्वयादवगम्यते। तत् ब्रह्म सर्वज्ञं सर्वशक्ति इति सिद्धान्तेन उपस्थाप्यते। अतः पूर्वपक्षोऽपि हेयोपादेयरहितस्य जिज्ञास्यत्वे, वेदस्य च कर्ममात्रपर्यवसायित्वात् शास्त्रानर्थक्यं स्यादिति युक्तः एव।

रामानुजाचार्यैः सम्बन्धज्ञानपूर्वकमुपासनं मोक्षसाधनम् इत्युक्तम्, तथाऽभ्युपगमे कर्तृत्वादि राहित्यस्य प्राप्तये कर्म क्रियते इति विरुद्धं भाति।

वाल्लभमते समवायिकारणत्वं समन्वयाधिकरणमुखेन विचार्यते इत्युक्तं तदपि न युक्तं भाति ब्रह्मणः समवायिकारणत्वे उक्ते विवर्तपरिणामवादः वक्तव्यः भवेत्।

तत्स्थाने अविकृतपरिणामवादः तैः अङ्गीक्रियते। तत्र दृष्टान्तः यथा स्वर्णादेः आभरणात्मना विकृतस्य स्वर्णत्वमाभारणत्वम् इति उभयथा व्यपदेशः सम्भवति तथा प्रपञ्चः ब्रह्म इति एकस्यैव ब्रह्मणः व्यपदेशः भवितुमर्हति इति।

किन्त्वत्र विचारे क्रियमाणे लौकिकस्य स्वर्णस्य आभरणात्मना परिणामः किञ्चित् द्रव्यान्तरं संयोज्य एव कर्तव्यः भवति, तदा अज्ञानमिति अविद्या इति वा अध्यासहेतुभूतं पदार्थान्तरमाश्रित्य एव ब्रह्मणः कारणत्वं वक्तव्यम्। तथा सति वेदान्तमतसिद्धं ब्रह्मजगत्कारणोपस्थापक विवर्तवादमिव स्वमतं साधितं भविष्यतीति अविकृतपरिणामवादश्च त्यक्तः भवेत्। न समवायिकारणत्वादिनिरूपणाय समन्वयाधिकरणविमर्शः। स्यादेतत्। द्वाभ्यामपि रामानुजवल्लभाभ्यां वेदस्य मिथ्यात्वं न सिद्ध्यति इति प्रतिपाद्यते। बुद्धजन्मनः प्राक् वेदानां केनाऽपि मिथ्यात्वं नोक्तम् इति च उच्यते तत्र वेदा अवेदा भवन्ति इति वाक्येन विरुध्यते।

वेदानां ब्रह्मज्ञानोत्तरं मिथ्यात्वमिति वदता भाष्यकारेण शङ्करणाचार्येण दोषः कृतः इति किञ्चित्कालं तुष्यतुदुर्जनन्यायेन अङ्गीकुर्मश्चेदपि वेदानां कीदृशं सत्यत्वं तयोरभिमतमिति न निश्चयेन वयं ज्ञातुं पारयामः।

किं नाम सत्यत्वं रामानुजवल्लभयोरिष्टमिति सार्वकालिकी जिज्ञासा। अबाध्यत्वं सत्यत्वलक्षणम् इति चेन्न जगत्सत्यात्वाभ्युपगमात्। जगति बाध्यत्वदर्शनात् च, भवत्वेवम्।

समन्वयाधिकरणसमीक्षा सम्पन्ना।

इत्थं शाङ्कररामानुजवाल्लभमतानुसारेण चतुस्सूत्र्यन्तभाष्यसमीक्षा सम्पन्ना इति।